(FOR PRIVATE CIRCULATION ONLY)

( नितान्तं गोपनीयम् । )




पद्मश्री—विरचितं

# नागरसर्वस्वम्

जगज्ज्योतिर्मल्लविरचितया टीकया

तथा

तनुसुखरामशर्मकृतया टिप्पण्या समन्वितम् ।

टिप्पणीकृता संशोधितम्

मुंबय्यां

'मणिलाल इच्छाराम देशाई' इत्यनेन स्वीये

'गुजराती' मुद्रणयन्त्रालये मुद्रितम् ।

कोट सासुनबिल्डिंग नं० ८

संवत् १९७७.　　　　　　　　　　　　　　　　　　क्रिस्ताब्दाः १९२१.

# विषयानुक्रमणी ।

## परिशिष्टानि ।

# भूमिका ।

अस्मिन् संसारे न हि कश्चिदपि प्राणी रत्यादिनवभावैकतरशून्यः क्षणमपि तिष्ठति । तेषु रतिरेव प्रायो व्यापकः, तदतिरिक्तभावोदये तस्याः परंपरया भावाभावमुखेन कारणत्वात् तदानीं तस्यास्तिरोहितत्वेनावस्थानाच्च । रतिश्च–" रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम् । " इति लक्षणलक्षिता, प्रेमार्द्रं मनो रतिरित्यर्थः । सैव गुरुवयस्कदेवगुर्वादिविषया भक्तिरिति, न्यूनवयस्कपुत्रादिविषया वात्सल्यमिति, समानवयस्कमित्रादिविषया मैत्रीति, नामान्तरभागिनी जायते । सैव च स्त्रीपुंसयोः परस्परोपरि जायमाना शृंगाराख्यां भजते । उक्तं च अलंकारशेखरे ( २० । १४ )– " रतिर्भवति देवादौ मुनौ पुत्रे नृपे गुरौ । शृंगारस्तु भवेत्सैव या कान्ताविषया रतिः ॥ " इति । सा च स्थायित्वं गता शृंगाररस इत्युच्यते ।

स्त्रीपुंसंबंधमूलकोऽयं संसारो गृहस्थाश्रमश्चेति प्रसिद्धं, तत्सम्यक्त्वमूलं च शुद्धा निरुपाधिका रतिरेव । तत्फलं सुदाम्पत्यं सीतारामयोरुपमानीभूतं वर्णितं श्रीभवभूतिना–" अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्विश्रामो हृदयस्य यत्र, जरसा यस्मिन्नहार्यो रसः । कालेनावरणात्ययात् परिणते यत्स्नेहसारे स्थितं, भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥ " ( उत्तररामचरिते १ । ३९ ) इति । ( यत् अद्वैतमित्यादित्रिपाद्या वर्णितं तत् एकं हि, येनेत्यध्याहारः, कथमपि प्राप्यते, तस्य सुमानुषस्य भाग्यशालिनः भद्रं कल्याणमित्यर्थः ॥ ) यथा च रत्याः सौन्दर्यवीर्यवत्त्वकलावित्त्वदाक्ष्यादिगुणा उत्पादकाः संवर्धकाश्च, तथैव तदभावा रतिविघातका इति प्रीतिवर्धकोपायानां इंगितादिज्ञानेन तत्तद्दोषापकरणपूर्वकसंश्लिष्टसुरतविधिना स्वदाररक्षणसुतोदयादीनां च सम्यग्ज्ञानोपदेशाय, तद्द्वारा च गृहस्थाश्रमपीठभूतदाम्पत्यधर्मस्य संसिद्धये सकलविद्यानां मूलोपदेष्ट्रा भगवता महेश्वरेणादौ कामतन्त्रं व्यरचि । (कामश्च– " स्त्रीषु जातो मनुष्याणां स्त्रीणां च पुरुषेषु वा । परस्परकृतः स्नेहः काम इत्यभिधीयते ॥ " इत्युक्तलक्षणः ।) तच्चातिविस्तृतत्वादलसानां नात्युपकारीति पूर्वैर्महर्षिभिर्विभज्य बहुशाखत्वं नीतम् । तदपि यावज्जिज्ञासाविषयाणामेकत्रानुपलब्धेर्नात्युपयोगीति वात्स्यायनेन मल्लनागाख्येन मुनिना कामसूत्रनिबन्धनेन सर्वो विषयः संक्षिप्य प्रकाशितः । तदवलंब्य अनेकैः पण्डितैर्विषयाणां न्यूनाधिकतया क्वचित्क्वचित्स्वानुभूतवस्तुनिवेशनैश्च परःशतं ग्रन्था एनं तृतीयं पुरुषार्थमधिकृत्य लोकोपकारधिया विरचिताः ॥

तेषु पूर्वं (१) कल्याणमल्लकृतोऽनङ्गरङ्गः, (२) जयदेवकृता रतिमञ्जरी, (३) वात्स्यायनविरचितं कामसूत्रं शंकरार्यकृतजयमङ्गलाख्यटीकासमेतं, (४) रतिशास्त्रं, (५) कुक्कोककृतं रतिरहस्यं काञ्चीनाथकृतदीपिकान्वितं, (६) हरिहरकृता च शृंङ्गारदीपिका रतिरहस्येत्यपरनाम्नी ( अन्तिमपरिच्छेदद्वयहीना ), इति षड्ग्रन्था मुद्रिताः । इदं पद्मश्रीकृतं नागरसर्वस्वं ज्योतिर्मल्लकृतटीकामत्कृतटिप्पणाभ्यां समेतं सप्तमो ग्रन्थः प्रथमवारं मुद्रितावस्थां प्राप्तः ॥

अस्य ग्रन्थस्यैतद्विषयकापरग्रन्थेभ्यः बहुष्वंशेषु वैलक्षण्यं दृश्यते । तथाहि स्त्रीणां संकेतकानि ( परि० ५–११ ), नाडीसंक्षोभणादि ( परि० १८–१९ ) सशब्दचुम्बनानि ( परि० २१ ), जिह्वाप्रवेशाः ( परि० २६ ), चूषणं (परि० २७), मर्दनं ( परि० ३४ ), ग्रहणं ( परि० ३५ ), अङ्गुलिप्रवेशाः ( परि० ३६ ), चेति विषया अन्यत्रोपदिष्टा न लक्ष्यन्ते । अपि च स्त्रीरतिवर्धनाय पुरुषै रत्नादिधारणं कर्तव्यं इति विविधरत्नपरीक्षाऽप्यतिसंक्षेपेण तृतीये परिच्छेदे वर्णिता । तथा रमणीनां विविधाः शृंगारचेष्टा हावाख्या नागरकत्वस्य चातुर्यस्य वा प्रकाशनेन कामुकप्रीतिवर्धना इति तेऽप्यत्र त्रयोदशपरिच्छेदे सोदाहरणं लक्षिताः, येषां निवेशो नान्यकामशास्त्रीयग्रन्थेषु कृतः । तथा मंत्रविशेषैः कामकलाक्षोभणं ( परि० १७ ) सुतोदयश्च (परि० ३८) नूतनौ विषयौ । अपि चात्र स्त्रीपुंजातिनिर्णये (परि० १४), कामकलास्थानकथने ( परि० १७ ), चुम्बनप्रकरणे ( परि० २५ ) चान्यग्रन्थोक्तिभ्यः कचिद्भेदेन कथनानि । एवमस्य बहुगुणविशिष्टत्वादस्य कर्ता च बौद्धभिक्षुरिति विलक्षणतया, प्राचीनकालेऽस्य महत्यां प्रतिष्ठायामपि ( यथा घ–परिशिष्टावलोकनेनानुमातुं शक्यं, ) इदानीं अतीव दुष्प्राप्यतया कालधर्ममिदं ग्रन्थरत्नं मा प्राप्नोत्वित्ययं ग्रन्थो मुद्रणद्वारा बहुसंख्याकत्वं प्रापितः ॥

---

## २. ग्रन्थकर्ता पद्मश्रीः ।

अस्य निर्माता पण्डितः पद्मश्रीरित्याख्यः कश्चिद्बौद्धभिक्षुः । तन्नाम पद्मपण्डित इति पद्मश्रीज्ञान इति पद्मज्ञान इति च वैविध्येनोल्लिखितं दृश्यते । पद्मश्रीरिति नाम्न ईकारान्तत्वात् ग्रंथकर्ता स्त्रीति कैश्चिद्भ्रान्तम् । वासुदेवाख्येन ब्राह्मणमित्रेण प्रेरितोऽयं कांश्चिद्दाम्रग्रंथान् शांकरं कामतंत्रं अन्यांश्च ग–परिशिष्टे सूचितान् अनेकप्रसिद्धाप्रसिद्धान् ग्रन्थादीनवलोक्येमं ग्रन्थं विरचितवान् ॥

अयं ईस्वीयवर्ष १००० संमितस्य कालस्य समन्ताद्बभूवेत्यनुमीयते, तत्प्रकारश्चात्र ग्रन्थपुष्पिकायाष्टिप्पणे ( पृ. ११६ ) द्रष्टव्यः ॥

अस्मिन् ग्रन्थे क्वचित् ' आरभेत् '–इत्यादिका अपाणिनीयाः प्रयोगा दृश्यन्ते, ते अशुद्धाः कस्यचिद्बौद्धव्याकरणस्य वाऽनुकूला विज्ञेयाः । तथाऽत्र अभिरूढा–योग्या–चुम्ब–खग–त्र्यस्र–मयूरक–यष्टि–इत्यादि–शब्दा नातिप्रसिद्धा अपि प्रयुक्ताः॥

अस्य कर्ता बौद्धो भिक्षुश्च सन् कामशास्त्रविषयकं ग्रन्थं रचयामासेति न विस्मयकरं, यतः पुराकाले पुरुषार्थत्वात् ऐहिकपरमसुखसाधनत्वाच्चैतच्छास्त्रस्य सम्यग्ज्ञानं–सर्वेषामावश्यकमिति, विद्यादातॄणां गुरूणामपि शिष्योपदेशाय च तथाविधमिति मतमासीत्, अतो बहुभिर्बौद्धाचार्यैर्जैनसाधुभिः परिव्राजकैश्च तत्रतत्र स्वीयकृतिष्वेतच्छास्त्रपरिचयः प्रकटीकृतः ॥

---

## ३. टीकाकारो जगज्ज्योतिर्मल्लः ।*

अयं नेपालमहाराज्यस्य भक्तपुर( भाटगांव )विषयस्य राजाऽऽसीत् । स सूर्यवंशीयः त्रैलोक्यमल्लेत्यपराख्यस्य त्रिभुवनमल्लस्य राज्ञः पुत्रः वि. सं. १६७३–१६८९ ( ई. सं. १६१७–१६३३ ) वर्षेषु राज्यं परिपालयामास । स च भवानीशंकरयोर्भक्तः पण्डितानां कलाविदां च संग्राहक आश्रयदाता च बभूव । तेन केचन ग्रंथा विरचिताः केचन स्वनाम्ना कारिताश्च । ते च—

(१) संगीतसारसंग्रहः (श्लोकसंख्या १५३९। रचनाकालः वि. सं. १६८२)। तत्र विप्रदासभरतव्यासदेवानां नामोल्लेखः ।

( २ ) संगीतभास्करः—अभिलाषकृतसंगीतचन्द्रस्य टीकारूपः ( श्लो. सं. ५३८४ )। एतस्माद् ज्ञायते यत् संगीतचंद्रग्रंथो जगज्ज्योतिर्मल्लेन दक्षिणदेशादानीतः, तस्येयं टीका च वंशमणिनाम्नः पंडितस्य साहाय्येन कृता ।

वंशमणिश्च मैथिलो नेपाले कृतवसतिरासीत् । अयं भारद्वाजगोत्रीयः, रामचंद्रशर्मणः पुत्रः, चतुरङ्गस्य गीतदिगम्बरनाटकस्य चतुरङ्गक्रीडाविषयकस्य चतुरंगतरंगिण्याख्यस्य ग्रन्थस्य च कर्ता ।

---

* टीकाकर्तुरिदं समयादिनिरूपणं श्रीहरप्रसादशास्त्रिणा इंग्लिष्–भाषायां संकलितात् " नेपालराजकीयपुस्तकभाण्डागारस्थताडपत्रकागजपत्रात्मकहस्तलिखितपुस्तकसूचीपत्रात् " संगृहीतम् ॥

( ३ ) श्लोकसारसंग्रहः ( श्लो. सं. १८१०। र. का. वि. सं. १६८२ )–त्रयस्त्रिंशद्विषयकपरकृतश्लोकसंग्रहात्मकः 'कोशः' ।

( ४ ) नागरसर्वस्वटीका–( अत्र मुद्रिता । )

( ५ ) स्वरोदयदीपिका ( श्लो. सं. ४७९८। र. का. वि. सं १६८० )–नरपतिजयचर्याख्यस्वरोदयशास्त्रस्य टीकारूपः ।

( ६ ) गीतपञ्चाशिका ।

( १–२ ) कुंजविहारी–कुवलयाश्वाख्ये नेवारीभाषायां नाटके च ।

( अस्य राज्ञः पुत्रः प्रतापमल्लोऽपि कविरासीत्, अस्य च पौत्रेण-जगत्प्रकाशमल्लेन पद्यसमुच्चयनामा कश्चित्सुभाषितकोशः संकलितः, अस्य दौहित्रस्य अनंतस्य कृते च घनश्यामेन हस्तमुक्तावल्याख्यस्य अभिनयशास्त्रस्य टीका विरचिता (वि.सं.१७३१।)

इयं नागरसर्वस्वटीका अतीव तुच्छा बहुषु स्थलेषु ( १३।२८–२८,१५।११, १९।१, २०।२–५, २१।२, २५।३, इत्यादिषु ) दुष्टार्था च । एतेषां मूलं तु मूलमातृकापुस्तकस्य अशुद्धपाठबहुलत्वं, टीकाकर्तुश्च प्रकृतशास्त्रापरिचयः । अत्र प्रायः पद्यं गद्यात्मना परिवर्तितम् । तत्राप्यशुद्धपाठानुसरण–दुष्टान्वय–दुष्टसर्वनामोद्देश्यतादयो बहवो दोषाः । एवं सत्यपि क्वचिदुपयुक्ततया, टीकाकर्तुश्च बहुमानेन, तत्प्रयत्नस्य रक्षणार्थमियं संपूर्णतयाऽत्र प्रकाशिता ।

टीकायां केवलं द्वे समुद्धरणे अमरकोशात् ( ७ । १६, ३८ । १८ ), एकं च स्मृतिविशेषात् ( १८ । १५ ) ।

---

## ४. मातृकाकोशौ ।

अस्य नागरसर्वस्वस्य नागरकसर्वस्वस्य वा मुद्रणाधारभूते द्वे पुस्तके । तत्र—

( १ ) स. पु. इति संक्षिप्ततयाऽत्र संकेतितं, काशीस्थस्यानेकदुर्लभ्यप्राचीनपुस्तकसंग्रहरसिकस्य परोपकारनिरतस्य विदुषो 'बाबु गोविंददास' इत्याख्यस्य महाशयस्य सटीकं पुस्तकं, तैरेव कृपया प्रहितम् । इदं ( ७ । ४७ ए संख्यांकं ) अत्र ङ–परिशिष्टे वर्णितस्य नेपालराजकीयपुस्तकालयस्थपुस्तकस्य प्रतिरूपकं, तैरेव कतिपयवर्षपूर्वं नेपालराजगुरुद्वारा कारयित्वा संगृहीतम् । नेपालस्थं मूलं तु नेवारीलिप्यां कागजोपरि लिखितं ५३ पत्रात्मकं, १४६४ च इति संख्यांकितम् ।

टीकाकाराणामेव मूलपुस्तके लिपिकरप्रमादात् पत्रव्यत्ययादिना द्वित्रिस्थानेषु

विषयक्रमभंगादिकं जातं, टीकाकारेण च तथैव व्याख्यातम्। इदं सर्वमस्मिन् संस्करणे समीकृत्य उक्तदोषपरिहारेण स्थापितम्।

(२) अत्र बी. संज्ञितं श्री बीकानेरमहाराजग्रंथभांडागारस्थपुस्तकस्य मदर्थं कारितं प्रतिरूपकम्।

एतयोर्द्वयोः परिच्छेदविभागकरणे भेदः। तत्र स. पुस्तके १८ परिच्छेदाः, बी. पुस्तके ३८ परिच्छेदाः। नेपालमहाराजपुस्तकालयवर्तिमूलमात्रपुस्तकेऽपि (१६४८ च संख्याते) बी. पुस्तकपरिच्छेदाविसंवादात् अस्मिन्मुद्रणे बी. पुस्तकानुसार्येव परिच्छेदविभागः स्थापितः।

शार्ङ्गधरपद्धत्यादिषु ग्रंथेषु अत्रत्याः श्लोकाः समुद्धृता दृश्यंते। तत्रत्याः पाठा अपि अत्र प्रयत्नेन संगृहीताः। मातृकापुस्तकयोर्ये पाठाः समीचीना भातास्त एव मूले स्थापिताः, टीकानुरोधिपाठभेदास्तु पाठान्तरविभागे स्थूलाक्षरैर्मुद्रापिताः। यद्यपि लेखकानां प्रमादादज्ञानात्संभ्रमाद्वोद्भूतानि पाठान्तराणि नोल्लेख्यानीति मतं, तथापि अस्य मातृकाणामतिविरलत्वात् तादृशभ्रष्टपाठोद्भवमूलज्ञानाय चात्र सर्वाणि पाठान्तराणि निवेशितानि॥

इति विज्ञप्तिः

**तनुसुखरामशर्मणः॥**

॥ श्रीः ॥

सटीकम्

# नागरसर्वस्वम् ।

मुहूर्तमपि यं स्मरन्नभिमतां मनोहारिणीं
लभेत मदविह्वलां झटिति कामिनीं कामुकः ।
तमुल्लसितडम्बरं सुरुचिराङ्गरागारुणं
नमामि सुमनःशरं सततमार्यमञ्जुश्रियम् ॥ १ ॥

॥ ॐ नमः । श्रीभवानीशङ्कराभ्यां नमः ॥

श्रीजगज्ज्योतिर्मल्लेन भवानीचरणाम्बुजम् ।
नत्वा नागरसर्वस्वटीकेयं परितन्यते ॥

आदौ ग्रन्थकारः कामशास्त्रत्वात् कामदेवं नमस्करोति । अहं ग्रन्थकारः, तत् तस्मात्, इह ग्रंथे, तं सुमनःशरं कामं, सततं निरन्तरं, नमामि नमस्करोमि । सुमनः पुष्पं तदेव शरो यस्य सः तं, तं कम् ? कामुकः यं कामं मुहूर्तमपि स्मरन्, अभिमतां स्वमनोवाञ्छितां, कामिनीं लभेत; कथंभूतां कामिनीम् ? मनोहारिणीं अर्थात् आत्मनः मनोहारिणीम्; पुनः कथंभूताम् ? मदविह्वलां मदेन विह्वलां सगर्वितामित्यर्थः । तं किंविशिष्टम् ? उल्लसितडम्बरं उल्लसितो डम्बरो गर्वो यस्य सः तम्; पुनः कथंभूतम् ? सुरुचिराङ्गरागारुणं सुरुचिरं च यत् अङ्गं चेति तत् सुरुचिराङ्गं, सुरुचिराङ्गे रागेण अनुलेपेन अरुणो यः सः तम्; पुनः कथंभूतम् ? आर्यमञ्जुश्रियं–आर्या गरिष्ठा, मञ्जु कोमला, श्रीः शोभा, यस्य सः तम् ॥ १ ॥

---

**पाठान्तराणि**—श्रीगणेशाय नमः ॥ ॐ नमोमकरध्वजाय ( ने. ) ॥ सकृत्तमपि० ( बी. ने. ) । [1]विह्वलां यदिह कामिनीं ( ने. ) [2]विह्वलां तदिह–( इति टीकानुसारी पाठः । ) लडहकामिनीं ( ने. ) समुल्लसित ( ने. ) ॥ १ ॥

---

**टिप्पणम्**—'सकृत्' इति पाठे एकवारम् । यद्वा सुरुचिरेण अङ्गरागेण शरीरोद्वर्तनार्थकद्रव्येण अरुणं रक्तवर्णम् । आर्यमञ्जुश्रीः–मञ्जुश्रीः बोधिसत्त्वानामेकः प्रसिद्धः, आर्यः पूज्यार्थे । अपि च ग्रन्थकारस्य पद्मश्रियः बौद्धत्वात् ग्रन्थारंभे तत्स्मरणं समुचितम् ॥ १ ॥

केचिद्भाषान्तरकृततया कामशास्त्रप्रबन्धा
दुर्विज्ञेया, गुरुतरतया, केचिदल्पार्थकाश्च ।
तत्पद्मश्रीविरचितमिदं सर्वसारं सुबोधं
शास्त्रं शीघ्रं शृणुत सुधियोऽभीष्टधर्मार्थकामाः ॥ २ ॥

केचित् कामशास्त्रप्रबन्धाः भाषान्तरकृततया दुर्विज्ञेयाः भाषाभेदकृतत्वात् दुःखेन बोधसाध्याः । केचित् अल्पार्थकाश्च दुर्विज्ञेयाः ज्ञातुं अशक्याः । हे सुधियः सुशोभना धीः येषां ते सुधियः पण्डिताः, तत् तस्मात् कारणात्, पद्मश्रीनामपण्डितविरचितं इदं सर्वसारं शास्त्रं अभीष्टसर्वार्थकामाः स्ववाञ्छितसर्वकार्याणि (?) शीघ्रं शृणुत ॥ २ ॥

नानाविचित्रैः सुरतोपचारैः
क्रीडासुखं जन्मफलं नराणाम् ।
किं सौरभेयीशतमध्यवर्ती
वृषोऽपि संभोगसुखं न भुङ्क्ते ॥ ३ ॥

नराणां जन्म । नानाविचित्रैः नानाप्रकारैः, सुरतोपचारैः सुरतप्रबन्धैः । क्रीडासुखं केलीसुखं, फलं जन्मसार्थकं इत्यर्थः । एवं चेत्, न । तदा, सौरभेयी गौः, शतमध्यवर्ती, वृषोऽपि वृषभोऽपि, संभोगसुखं किं न भुङ्क्ते—न रसाभिनयज्ञानेन जानाति ॥ ३ ॥

हित्वाऽऽत्मकामं शमयेद्वशी यो
नितम्बिनीनां मदनज्वरार्तिम् ।
कृपान्वितो मन्मथशास्त्रवेदी
समाप्नुयात् स्वर्गसुखं स धीरः ॥ ४ ॥

यः नरः आत्मकामं हित्वा, नितम्बिनीनां स्त्रीणां, मदनज्वरार्तिं कामज्वरपीडां, शमयेत्, सः पुरुषः, स्वर्गसुखं समाप्नुयात् । कथंभूतः पुरुषः ? वशी जितेन्द्रियः; पुनः

---

पा०—भीष्टसर्वार्थ० (स. पु.) ॥ २ ॥ नानानिबन्धैः । संयोगसुखं । (माधवकृतायुर्वेदप्रकाशे पाठाः) । नानानिबन्धैः इति पाठः रुद्रकृतस्मरदीपिकायाम् ॥ ३ ॥ सुधीरः (ने) ॥ ४ ॥

---

टि०—केवलसंभोगसुखं तु पशवोऽपि विन्दन्ते, यदुक्तं—"आहारनिद्राभयमैथुनानि समानमेतत्पशुभिर्नराणाम् ।" इति । नरजन्मफलं तु इदं यत् पश्वगोचराभिः विचित्राभिः क्रीडाभिः परमानंदप्राप्तिः इत्यर्थः ॥ ३ ॥ द्वितीयश्लोके संबोधितानामभीष्टधर्मार्थकामानां नराणां तृतीये कामप्राप्तिमुक्त्वाऽस्मिन्धर्मप्राप्तिमपि निर्दिशति हित्वेति । आत्मकामं स्वलाभं त्यक्त्वा, निष्कामतया इत्यर्थः । तथाच अनङ्गरङ्गे—"अथ कारण-

कथंभूतः ? कृपान्वितः कृपायुक्तः; पुनः कथंभूतः ? मन्मथशास्त्रवेदी कामशास्त्राभिज्ञः, अत एव धीरः पण्डितः ॥ तथा चोक्तं महाभारते—"कामार्तां स्वयमायान्तीं यो न भुङ्क्ते नितम्बिनीम् । सोऽवश्यं नरकं याति तन्निःश्वासहतो नरः ॥"

तथा चाह महेश्वरः—*

"कामं त्यक्त्वाऽऽत्मनः कामी कामव्याधिनिपीडिताम् ।
चिकित्सयति यो नित्यं पदं प्राप्नोति कामिकम् ॥" ५ ॥

यः नरः, आत्मनः कामं त्यक्त्वा, कामज्वरनिपीडितां स्त्रियं, नित्यं चिकित्सयति, स पुरुषः, कामिकं इच्छाविषयि(य)कं, पदं स्थानं प्राप्नोति ॥ ५ ॥

ज्ञानेऽस्य शास्त्रस्य धनाशयानां
तिष्ठन्तु तावद्धनधान्यलाभाः ।
सुतार्थिनां नापि सुता दुरापाः
श्रद्धावतां साधयतां प्रयत्नात् ॥ ६ ॥

अस्य कामशास्त्रस्य ज्ञाने, धनाशयानां धनलुब्धानां, धनधान्यलाभाः, तिष्ठन्तु भवन्तु,—यतः सर्वे धातवः भावार्थाः प्राप्तकार्थाश्च । प्रयत्नात् यत्नपूर्वकं, साधयतां उद्योगं कुर्वतां, श्रद्धावतां श्रद्धायुक्तानां, सुतार्थिनां पुत्रार्थिनां अपि, सुताः पुत्राः, न दुरापाः किं तु सुलभा एव, अस्य शास्त्रस्य ज्ञानात् इति भावार्थः ॥ ६ ॥

यथोपदेशेन वराङ्गदेशे
वीजस्य विन्यासवशेन नारी ।
सङ्कल्पजव्याधिनिपीडिताङ्गी
समर्पयेत् सद्रविणं शरीरम् ॥ ७ ॥

---

पा०—* 'तथा चाह महेश्वरः' (बी. ने.) (स. पु. नास्ति)। कामां (ने) ॥ ५ ॥

---

वशात्परस्त्रीगमनस्यानघत्वमुच्यते···नारी चोन्मदयौवनाऽभिलषितं कान्तं न चेदाप्नुयादुन्मादं मरणं च विन्दति तदा कन्दर्पसंमोहिता । संचिन्त्येति समागतां परवधूं रत्यर्थिनीं स्वेच्छया गच्छेत् क्वापि न सर्वदा सुमतिमानित्याह वात्स्यायनः" (८।१३।) ॥ ४ ॥

टि०—चिकित्सयति संभोगादिदानेन इति शेषः । कामिकं पदं इष्टं स्वर्गमित्यर्थः ॥ ५ ॥ शेषं अर्थलाभं धर्मलाभं चाह ज्ञानेऽस्येति ॥ ६ ॥ तदेव विवृणोति यथेति । यद्वा कामशास्त्रोपदेशानुसारेण संभोगं ददते पुरुषाय सद्रविणं स्वशरीरं, न केवलं स्वशरीरं उपभोगाय अपि तु परितुष्टया धनमपि ददाति ॥ ७ ॥

सङ्कल्पजः कामः, तद्व्याधिना निपीडिताङ्गी निपीडितशरीरा नारी, वराङ्गदेशे गुह्यस्थाने, यथोपदेशेन उपदेशक्रमेण, बीजस्य विन्यासवशेन शुक्रसंस्थापनेन, सद्रविणं सधनं, शरीरं पुत्रं, समर्पयेत् अर्थात् स्वस्वामिने स्वपुरुषाय ॥ ७ ॥

जगत्त्रिवर्गप्रभवं यदेतत् ,
कृतं ततः सत्त्वहितैर्महद्भिः ।
बुधैर्विधेया न कुदृष्टिरस्मिन् ,
गुणांशहृद्या वचनेन सन्तः ॥ ८ ॥

सत्त्वहितैः प्राणिहितैः, महद्भिः, एतत् जगत् त्रिवर्गप्रभवं कृतम् । अस्मिन् शास्त्रे, बुधैः पण्डितैः कुदृष्टिः न विधेया, यतः सन्तः वचनेन गुणांशहृद्याः गुणांशग्राहिणो भवन्ति ॥ ८ ॥

तथाच महेश्वरः—*

सत्त्वोपकारपरमा हि त्रिवर्गसाराः,
सत्त्वोपकाररचिता विदुषां विभूतिः ।
सत्त्वोत्थमेव विदधीत यदाश्रयीत
वैशेषिकं यदिह तेन कृतं सुशास्त्रम् ॥ ९ ॥

त्रिवर्गसाराः धर्मार्थकामाः, सत्त्वोपकारपरमाः प्राणिनां उपकाररताः । विदुषः पण्डिताः, सततं सत्त्वोपकारं प्राणिहितं, बिभर्ति कुर्वन्ति । सत्त्वोत्थं प्राणिजनितं, यत् विदधीत आश्रयीत वा, तेन पुरुषेण, सुशास्त्रं वैशेषिकं कृतं मोक्षपदं प्राप्तं, यतः वैशेषिकशास्त्रे मोक्षनिर्णयकथनम् ॥ ९ ॥

---

पा०—गुणांगहृद्या (बी) ॥ ८ ॥ * (सटीक पुस्तके नास्ति)। सत्त्वोपकारसततं विदुषो विभर्ति (इति सटीकपुस्तके द्वितीयः पादः)। 'यदिह' इति भ्रष्टं स. पु. ॥ ९ ॥

---

टि०—यस्मात् एतत् शास्त्रं जगतः त्रिवर्गस्य धर्मार्थकामानां प्रभवः उत्पादः यस्मात् तादृशम्। ततः महद्भिः इदं शास्त्रं प्रणीतं, अस्य त्रिवर्गसाधनत्वात्। यतः यत्र गुणस्य लवोऽपि वर्तते तेन सत्पुरुषा हृता भवन्तीत्यर्थः ॥ ८ ॥ यद्वा वैशेषिकं विशेषः सत्त्वोपकाररूपः अस्य अस्तीति वैशेषिकं, तस्मात् कृतं रचितं इत्यर्थः ॥ ९ ॥

सत्त्वोपकारपरमा हि ममाग्रपूजा,
सत्त्वापकारपरमश्च पराभवः स्यात् ।
दुःखं सुखं च मम सत्त्वसमानमिष्टं,
सत्त्वेषु यः प्रहरते स कथं मदीयः ॥ १० ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे त्रिवर्गनिर्णयो नाम प्रथमः परिच्छेदः ॥ ]

हि यस्मात् सत्त्वोपकारपरमा प्राणिनां उपकारपरा, मम अग्रपूजा श्रेष्ठपूजा इत्यर्थः । सत्त्वापकारपरमश्च प्राणिनां अपकारपरः, मम पराभवः स्यात् । दुःखं सुखं च मम सत्त्वसमाननिष्ठं सर्वप्राणिषु समानम् । सत्त्वेषु प्राणिषु, प्रहरते प्रहारं करोति, सः पुरुषः, कथं मदीयः ॥ १० ॥

इति श्रीमहाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां
नागरकसर्वस्वटीकायां प्रथमः परिच्छेदः ॥

---

प्रज्ञाकलायौवनजातिसम्पत्-
सौन्दर्यविद्यामदगर्विताभिः ।
सुदुर्लभाभिर्वरसुन्दरीभिः
संभोगसंजातसुखं यदीच्छेत् ॥ १ ॥
कालोचितैर्धूपितधौतवस्त्रै-
रत्नोज्ज्वलैराभरणैरनेकैः ।
कण्ठोपकण्ठोल्लसिताग्रपुष्प-
स्रग्भिश्च मत्तालिकुलाकुलाभिः ॥ २ ॥

---

पा०—सत्त्वसमाननिष्ठं ( स. पु. ) ॥ १० ॥ अस्मिन् ग्रन्थे सर्वत्र मूलपुस्तकपुष्पिका वी. पुस्तकात् निवेशिता, यतः सटीकपुस्तके सा न वर्तते । ( पद्मज्ञान इति पाठ ने० मूलपुस्तके ) ।

पा०—जातिसम्यक्सौन्दर्यं ( स. पु. ) ॥ १ ॥

---

टि०—सत्त्वानां सुखे दुःखे वा ममापि तुल्यं तत् इत्यर्थः । सुखं च सर्वेषामिष्टमिति ॥ १० ॥ ( ॥ १ ॥ )

टि०—सम्पत् धनम् । प्रज्ञादिविद्यान्तानां ये मदाः तैः ॥ १ ॥

नानाविधामोदविदग्धवासैः
श्रीखण्डताम्बूलशुभाङ्गरागैः ।
नरोत्तमो मन्मथशास्त्रवेदी
प्रसाधयेत् साधु निजं शरीरम् ॥ ३ ॥

( श्लोकत्रयेणान्त्यकुलकम् । )

नरोत्तमो, मन्मथशास्त्रवेदी कामशास्त्रवेत्ता, वरसुन्दरीभिः वरस्त्रीभिः, समं यदि संभोगसुखं इच्छेत् तदा साधु प्रथमं निजं शरीरं, प्रसाधयेत् अलङ्कुर्यात् । कथंभूताभिः वरसुन्दरीभिः ? प्रज्ञाकलायौवनजातिसम्यक्सौन्दर्यविद्यामदगर्विताभिः—प्रज्ञा ज्ञानं, कला: चतुष्षष्टिकलाः, यौवनं तारुण्यं, जातिः उत्तमजातिः, सम्यक्सौन्दर्यं उत्तमरूपं, विद्याः नानाविद्याः, मदः अभिमानः, एताभिः गर्विताभिः संयुक्ताभिः; पुनः कथंभूताभिः ? सुदुर्लभाभिः अत्यन्तदुःखलभ्याभिः । (१) । कैर्भूषणं कुर्यादित्याह— कालोचितैः ऋतुसमयोचितैः, धूपितधौतवस्त्रैः । पुनः कैः ? रत्नोज्ज्वलैः अनेकैः आभरणैः । पुनः कैः ? कण्ठस्य, उपकण्ठे समीपे, उल्लासिताग्रपुष्पस्रग्भिः अवलम्बित-शोभनपुष्पमालाभिः; कथंभूताभिः स्रग्भिः ? मत्ताः, अलिकुलाः भ्रमरसमूहाः, तैः आकुलाभिः व्याप्ताभिः । ( २ ) । पुनः कैः ? नानाविधाः नानाप्रकाराः, आमोदः सुगन्धः, विदग्धं ताम्बूलं, शुभाङ्गरागः शुभाङ्गलेपनः, तैः ॥ १।२।३ ॥

अनेकवाद्यं विविधास्त्रपङ्क्तिकं
सुपुष्पधूपोज्ज्वलराशिवासितम् ।
विचित्रसत्पट्टवितानशोभितं
प्रकल्पितात्यन्तमनोरमासनम् ॥ ४ ॥
प्रकम्पिपर्यङ्कसुघर्घरीरव-
प्रबुद्धपारावतकण्ठकूजितम् ।
रथाङ्गहंसस्वनरम्यदीर्घिका-
जलोर्मिसंलासकवातवीजितम् ॥ ५ ॥

---

पा०—धूपोज्ज्वलधूपवा० (स. पु.) । विचित्रसत्पाट्टवितान० (स. पु.)॥४॥ प्रकृष्टपर्यंक (बी) ॥ ५ ॥

---

टि०—विदग्धैः निर्वर्तितैः वासैः सुगंधैः इत्यर्थः ॥ ३ ॥ 'विविधास्रपंक्तिकं' इति पाठः स्यात्, विविधानां अस्राणां कोणानां पंक्तयो यत्र तत्, अष्टकोणादिकं इति यावत् । सत्पट्टं स्वच्छं प्रच्छदपटम् ॥ ४ ॥

विशुद्धभावोचितचित्रभूषितं
सुरागसिन्दूरविराजिकुट्टिमम् ।
प्रहृष्टचेतःशुकसारिकारवं
विनिर्मयेद्वासगृहं मनोरमम् ॥ ६ ॥

( श्लोकत्रयेणान्त्यकुलकम् । )

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे द्वितीयः परिच्छेदः ॥ ]

वासगृहं मनोरमं विनिर्मयेत् । कथंभूतं वासगृहम् ? अनेकवाद्यं नानावाद्यसहितम् । पुनः किंविशिष्टम् ? विविधास्त्रपंक्तिकं नानाशस्त्रश्रेणियुतम् । पुनः किंभूतम् ? सुपुष्पधूपोज्ज्वलधूपवासितं–सु शोभनं पुष्पं, धूपश्चासौ उज्ज्वलश्चेति धूपोज्ज्वलः, तैः धूपवासितम् । पुनः किंभूतम् ? विचित्रसत्याट्टवितानशोभितं–विचित्रं नानाप्रकारं, सत्यः सुन्दरः, अट्टः अट्टारिका, वितानं चन्द्रातपः, तैः शोभितम् । पुनः किंभूतम् ? प्रकल्पितं, अत्यन्तमनोरमं मनोहरं, आसनं यत्र तत् । ( ४ ) । पुनः किंभूतम् ? प्रकम्पो(म्पी?) यः पर्यङ्कः खट्वा, तस्य सुघर्घरीरवेण प्रबुद्धाः पारावताः तै कण्ठकूजितम् । पुनः किंभूतम् ? रथाङ्गः चक्रवाकः, हंसः, तयोः स्वनेन शब्देन, रम्या दीर्घिका तस्याः जलस्य ऊर्मिः तरङ्गः, तस्य संलासकः संचारको, यो वातः वायुः तेन वीजितम् । ( ५ ) । पुनः किंभूतम् ? विशुद्धिभावयोग्यचित्रेण भूषितम् । पुनः किंभूतम् ? सुरागसिन्दूरविराजिकुट्टिमं अत्यन्तरक्तवर्णसिन्दूरेण विराजितं शोभितं कुट्टिमं यत्र तत् । पुनः किंभूतम् ? प्रहृष्टं सानन्दितं चेतो यत्र तत् । पुनः किंभूतम् ? शुकसारिकारवं शुकसारिकयोः रवो यत्र तत् ॥ ४–५–६ ॥

इति महाराजाधिराजश्रीजगज्ज्योतिर्मल्लभूपविरचितायां
नागरसर्वस्वटीकायां द्वितीयः परिच्छेदः ॥

---

पा०—विशुद्धिभावो० ( स. पु. ) । सुरङ्गसिन्दूर० (बी) ॥ ६ ॥

टि०—विशुद्धभावः शृङ्गाररसः । "भोगावासो वासगृहं" इति हारावली, तेन रतालयं वासगृहम् ॥ ६ ॥ ( ॥ २ ॥ )

रत्नोत्तमानां गुणदोषजातं
तद्धारकाणां च शुभाशुभानि ।
वर्णप्रभेदैर्मणिमण्डलानां
प्रस्तावतः सत्त्वहिताय वच्मि ॥ १ ॥

प्रस्तावतः मणिमण्डनानां रत्नोत्तमानां गुणदोषजातं तद्धारकाणां पुरुषाणां च शुभाशुभानि, वर्णप्रभेदैः, सत्त्वहिताय प्राणिहिताय, वच्मि वदामि इत्यर्थः ॥ १ ॥

* दोषापमृष्टं मणिमप्रबोधा-
द्बिभर्ति यः कश्चन कश्चिदेवं ।
तं बन्धदुःखामयबन्धुवित्त-
नाशादयो दोषगणा भजन्ते ॥ २ ॥

कश्चन पुरुषः, कश्चिदेव, दोषापमृष्टं दोषकलङ्कितं, मणिं, अप्रबोधात् अज्ञानात्, बिभर्ति धारयति, तं पुरुषं, बन्धः बन्धनं, दुःखं, आमयो रोगः, बन्धुः इष्टः, वित्तं धनं, तेषां नाशादयः दोषगणाः भजन्ते ॥ २ ॥

गुणाः सुरूगौरवकान्तिमत्ताः
स्नैग्ध्यं महत्त्वं समताऽच्छता च ।
दोषास्तथा बिन्दुकलङ्करेखा-
त्रासो मलः काकपदं लघुत्वम् ॥ ३ ॥

---

पा०—मणिमण्डनानां । (स. पु.) ॥१॥ * 'तथा च रत्नशास्त्रे' इत्यधिकमत्र बी. पुस्तके । दोषोपमृष्टं (बी.) । दोषोपमृष्टं···कश्चिदेकम् । तं बन्धुदुःखायसबन्धवित्त··· । (इति रत्नरहस्ये संगृहीताः पाठाः) ॥२॥ गुणाः शुभा (बी.) मत्ता स्निग्धं (स. पु.) ॥ ३ ॥

---

टि०—द्वितीयपरिच्छेदे द्वितीयश्लोके "रत्नोज्ज्वलैराभरणैरनेकैः" इत्युक्तं, तत्प्रसङ्गतः केषाञ्चिद्रत्नानां गुणदोषाविष्करणमत्र क्रियते । इदं विवेचनं नान्यकामशास्त्रीयग्रन्थेषु ॥ १ ॥ मणिः रत्नं हीरकमाणिक्यादीनां सामान्यसंज्ञा ॥ २ ॥ गौरवं गुरुता, तुलने गुरुत्वम्, स्निग्धं स्नेहेन इव विलिप्तम्, अच्छता कलंकादिविहीनता । बिन्दुः 'छीटा' 'छांट' वा इति भाषायां; कलङ्कः "विरुद्धवर्णो यस्याङ्के–कलंकः क्षयकारकः" इति; रेखा 'चीर' 'चीरा' वा इति भाषायाम्; त्रासः "भिन्नभ्रान्तिकरस्त्रासः स कुर्यात् कुलसंक्षयम् ।" 'गडहा' इति भाषायाम्; मलः देहापरनामा "मलदिग्ध इवाभाति देहो देहविनाशनः ।" ॥ इति । इमे गुणदोषाः प्रायः सर्वरत्नानां ज्ञेयाः । "वर्णाधिक्यं गुरुत्वं च स्निग्धता च तथाऽच्छता । अर्चिष्मत्ता महत्ता च मणीनां गुणसंग्रहः ॥" इति कल्पद्रुमे ॥३॥

हीरकानां एते गुणाः—सुरुक् सुन्दरं, गौरवं गरिष्ठं, कान्तिमत्ता तज्ज्योतिष्कता, स्निग्धं मसृणता, महत्त्वं यद्यत् स्थूलं, समता दशशृङ्गान्यपि समानानि, अच्छता निर्मलता। हीरकानां एते दोषाः—बिन्दुः जलबुद्बुदवत् रेखा, कलङ्कं शुक्लश्यामादि नानाचिह्नं, रेखाः रेखायुताः, त्रासः भग्नता, मलः मलिनत्वं, काकपदं काकचरणवत् चिह्नं, लघुत्वं लघुता ॥ ३ ॥

तीक्ष्णाश्रिधारत्वसविस्तरत्वं
गुणौ तु वज्रस्य वदन्ति तज्ज्ञाः।
शुक्त्युद्भवानां मृदुसूक्ष्मभेद-
सुवृत्तशुक्लत्वममी गुणाश्च ॥ ४ ॥

तज्ज्ञाः रत्नपरीक्षकाः, वज्रस्य हीरकस्य, द्वौ गुणौ वदन्ति। तत् किम्? तीक्ष्णाश्रिधारत्वं कोणधाराः अतीवतीक्ष्णाः, सविस्तरत्वं सविस्तारः ॥ शुक्त्युद्भवानां मुक्ताफलानां, अमी गुणाश्च—मृदु कोमलं, सूक्ष्मभेदं सूक्ष्मच्छिद्रं, सुवृत्तं सुकोमलं, शुक्लत्वं अतीवतेजस्विशुक्लता ॥ ४ ॥

सुजाति रत्नं परिवृद्धिहेतु-
र्निधानलक्ष्मीसुतसेवकानाम्।
आरोग्यसौभाग्यफलायुषां च,
विजातिकं त्वाशु विनाशबीजम् ॥ ५ ॥

सुजाति रत्नं, निधानलक्ष्मीसुतसेवकानां परिवृद्धिहेतुः लक्ष्मीसुतसेवकानां परिवृद्धिहेतुः निवासकारणम्; आरोग्यसौभाग्यफलायुषां च परिवृद्धिहेतुः। विजाति रत्नं, आशु शीघ्रेण, विनाशबीजं विनाशकारणम् ॥ ५ ॥

* तथा च रत्नशास्त्रे—
"गुणवद्गुणसम्पदां प्रसूति-
र्विपरीतं व्यसनोदयस्य हेतुः।" इति ॥

गुणवत् रत्नं चेत् गुणसम्पदां विभूतिः स्थानम्। विपरीतं दोषवत् चेत्, व्यसनोदयस्य दुःखोदयस्य, हेतुः कारणम् ॥

पा०—तीक्ष्णास्र (बी.) °मविस्तरत्वं (बी.) ॥ ४ ॥ विजाति रत्नं सुविनाशबीजम् (बी) ॥ ५ ॥ * तथा च रत्नशास्त्रे इति (स. पु. नास्ति)। सम्पदां विभूति··· हेतुः (स. पु.) ॥ ६ ॥

टि०—सुवृत्तं सर्वतो वर्तुलम् ॥४॥ विजातिकं सदोषं कूटरत्नं वा ॥५॥ गुणवदिति—अस्य पूर्वार्धं तु "न च मार्गविभागमात्रवृत्त्या विदुषा वज्रपरिग्रहो विधेयः।" इति

वन्धूकपुंस्कोकिलनेत्रगुञ्जा-
तुल्यच्छवियोऽत्र स पद्मरागः।
आकृष्टनीलीरसबुद्बुदाभो
यो वाऽलिपृष्ठद्युतिरिन्द्रनीलः ॥ ६ ॥

वन्धूकपुष्पं पुंस्कोकिलनेत्रं गुञ्जा एतेषां तुल्यत्विषः समानतेजसः, स पद्मरागः। आकृष्टनीलीरसबुद्बुदाभः मथितनीलीरसभाण्डोत्थितबुद्बुदतुल्यवर्णः इन्द्रनीलः; वा पक्षान्तरे; अलिः भ्रमरः, तस्य पृष्ठद्युतिः यो मणिः स इन्द्रनीलः ॥ ६ ॥

खद्योतपृष्ठनवशाद्वलशैवलानां
तुल्यत्विषो मरकता मणयो भवन्ति।
रत्नोत्तमस्य हि शुभाशुभकारणस्य
व्याख्याऽत्र तन्न, कथिता अधिकाश्च मुख्याः ॥ ७ ॥

खद्योतपृष्ठनवशाद्वलशैवलानां तुल्यत्विषः तुल्यतेजसः मकर( ? मरकत ) नामधेया मणयो भवन्ति। रत्नोत्तमस्य रत्नमुख्यस्य, हि यस्मात्, शुभाशुभकारणस्य, अत्र ग्रन्थे, मुख्या व्याख्या कथिता, अधिका न कथिता ॥ ७ ॥

वैदूर्य एकः शिखिकण्ठनील-
स्तथाऽपरो वेणुदलप्रकाशः।
नानाविधा आकरयोनिभेदै-
र्वज्रं च मुक्ता मणयश्च सन्ति ॥ ८ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे रत्नपरीक्षा नाम
तृतीयः परिच्छेदः ॥ ]

---

पा०—विस्तारतो न कथिता गुणदोषभेदाः ( बी ) ॥ ७ ॥ शितिकण्ठ–[ इति क्वचित्पाठः ] ॥ ८ ॥

---

अन्यत्र ॥ ॥ पद्मरागः शोणरत्नं रविरत्नं माणिक्यम्। वज्रं भार्गवकम्। मुक्ता सौमम् ॥ इन्द्रनीलः शनिरत्नम् ॥ ६ ॥

टि०—शाद्वलः बालतृणैः हरितवर्णः प्रदेशः। शैवलः जलनीलिका शेवालम्। त्विट् छाया। मरकतः गारुत्मतं बुधरत्नं 'पन्ना' 'पाना' वा इति भाषायाम्। मणीनां अन्ये भेदाः शुभाशुभादिकं च विस्तरभिया नात्र व्याख्यातं, केवलं ये मुख्या अधिकाश्च सुलभाश्च त एव निर्दिष्टाः इत्यर्थः ॥ ७ ॥ वैदूर्यः 'वैडूर्यः' इत्यपि केतुरत्नं 'लशुनीया' इति लोके ॥ ८ ॥ अस्य रत्नविषयस्य विस्तरस्तु अगस्तिमते, शौरीन्द्रमोहनठक्कुरप्रणीतमणिमालायां, वङ्गभाषायां रामदाससेनकर्तृकरत्नरहस्ये च द्रष्टव्यः ॥ इति तृतीयः (॥ ३ ॥)

एकः वैदूर्यः, शिखिकण्ठनीलः मयूरकण्ठसदृशवर्णः; तथा अपरो वैदूर्यः वेणुदलप्रकाशः वंशपत्रसदृशवर्णः। वज्रं हीरकं, मुक्ताः, मणयश्च, आकरयोनिभेदैः उत्पत्तिस्थानभेदैः, नानाविधाः नानाप्रकाराः, सन्ति ॥ ८ ॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां
नागरसर्वस्वटीकायां तृतीयः परिच्छेदः ॥

---

नानाविदग्धवासा मुख्या मदनप्रदीपकाः ख्याताः।
वरकामुकः प्रयत्नाच्छिक्ष्येतादौ सुगन्धशास्त्रेभ्यः ॥ १ ॥

नानाविदग्धवासाः नानामनोहरगन्धाः, मदनप्रदीपकाः कामबोधकाः, ख्याताः। वरकामुकः श्रेष्ठकामुकः, प्रयत्नात्, आदौ प्रथमतः, गन्धशास्त्रेभ्यः, शिक्ष्येत शिक्षां कुर्यात् ॥ १ ॥

लोकेश्वरादिकेभ्योऽपटुमतिदुर्बोधगन्धशास्त्रेभ्यः।
सङ्गृह्य सारभागं प्रविधास्ये सुप्रसिद्धपदैः ॥ २ ॥

लोकेश्वरनामधेयादिकेभ्यः गन्धशास्त्रेभ्यः मन्दमतिबोधनमहाकठिनगन्धशास्त्रेभ्यः, सारभागं सङ्गृह्य सुप्रसिद्धपदैः अर्थ ( थ ? र्थं ? ) विधास्ये कथयिष्ये ॥ २ ॥

कुन्तलकक्षगृहोदरवसनवदनसलिलपूगफलवासान्।
स्नानोद्वर्तनचूर्णं वर्ती द्वे धूपदीपाख्ये ॥ ३ ॥

किं प्रविधास्ये ? तदेव आह। कुन्तलः केशः, कक्षः, गृहोदरं गृहमेव, वसनं वस्त्रं, वदनं मुखं, सलिलं जलं, पूगफलं गुवाकः, वासः सुगन्धः,—तान्, स्नानं स्नानीयजलं, उद्वर्तनचूर्णं, वर्ती द्वे धूपदीपाख्ये धूपदीपस्य वर्तिकाद्वयम् ॥ ३ ॥

नखकर्पूरकुङ्कुमागुरुशिह्लकमिति च केशपटवासः
क्रमवृद्धिभागरचितं भागत्रयशर्करासहितम् ॥ ४ ॥

केशपटवासः।

---

पा०—क्रमवृद्धिभागसहितं ( बी ) ॥ ४ ॥

---

टि०—आदिना ईश्वरकृता गन्धयुक्तिः शार्ङ्गधरस्मृतगन्धदीपिका इत्यादयो ग्राह्याः ॥ २ ॥ परिच्छेदस्य विषयसङ्ग्रहमाह कुन्तलेति ॥ ३ ॥ नखं शङ्खोद्भवं चर्म 'नखला' इति भाषायाम्, कुङ्कुमं कश्मीरजं 'जाफरान' इति, अगुरु चन्दनविशेषः प्रसिद्धं, शिह्लकं शिह्लरसं तुरुष्कं 'शिलारस' इति भाषायाम् ॥ ४ ॥

नख भाग १, कर्पूर २, कुङ्कुम ३, अगुरु ४, शिह्लक ५, एवं क्रमेण भागवृद्धिरचितं, एतेषां त्रिभागाः सितशर्कराः,—केशवासः ॥ ४ ॥

पत्रकशैलजशिह्लककुङ्कुममुस्ताऽभया चेति ।
त्रिगुडाः काक्षिकवासो ग्रहतिथिशिखिरुद्रवेदकरभागाः ॥ ५ ॥

कक्षवासः ।

पत्रक भाग ९, शैलज १५, शिह्लक ३, कुङ्कुम ११, मुस्ता ४, अभया हरीतकी २, एतेषां त्रिभागो गुडः,—कक्षवासः ॥ ५ ॥

कस्तूरी कर्पूरं कुङ्कुमनखमांसिवालागुरुकं च ।
चन्दनगुडकं क्रमशो वर्धितभागं तु गृहवासः ॥ ६ ॥

कस्तूरी भाग १, कर्पूर २, कुङ्कुम ३, नख ४, मांसि( ? सी ) जटामांसि( ? सी ) ५, वालचन्दन ६, अगुरु ७, श्रीखण्ड ८, गुड ९, एवं क्रमेण भागवृद्धिः,—गृहवासः ॥ ६ ॥

जातीफलकस्तूरीकर्पूरं चूतवारि-संस्थितम् ( संपिष्टम् ? ) ।
धूपितमगुरुकशिह्लकमधुगुडसितैश्च मुखवासः ॥ ७ ॥

जातीफलं, कस्तूरी, कर्पूरं, आम्ररसेन संपिष्टं, फलाभावे पत्रमपि संग्राह्यं, अगुरुशिह्लकमधुगुडशर्करासहितं, धूपितं धूमपानं कार्यं,—मुखवासः ॥ ७ ॥

क्रमवर्धितं त्वगेलामांसीशठ्यगुरु कुङ्कुमं चापि ।
घनचन्दनजातीफललवङ्गकङ्कोलकर्पूरम् ॥ ८ ॥
अष्टांशवंशरोचनसुकलितमतिस्वल्पशर्करासहितम् ।
पिष्ट्वा सहकाररसैर्मुखवासो भूमिपालानाम् ॥ ९ ॥

वदनवासः ।

---

पा०—कर्पूरकं च वारिसमपिष्टम् (बी) । मगुरुशि…शीतैश्च (स. पु.) 'जातीफलं च कस्तूरी कर्पूरं चूतवारिसंपृक्तम् ।…सिल्हं मधुगुडधूपैश्च…' इति शार्ङ्गधरपद्धतिस्थः पाठः ॥ ७ ॥ वर्धित ( स. पु. ) । मांसि ( स. पु. ) । सठ्यगरु ( बी ) ॥ ८ ॥ वंशलोचन ( बी ) ॥ ९ ॥

---

टि०—पत्रकं 'तमालपत्रं' 'तेजपात' इति प्रसिद्धम्, शैलेयं शिलाजतु 'शिलाजित' इति लोके, मुस्ता 'मोथ' इति भाषायाम् । कक्षः बाहुमूलम् ॥ ५ ॥ वालः ह्रीबेरं 'नेत्रवाला' 'वाळा' 'खस' इति वा ख्यातः ॥ ६ ॥ जातीफलं 'जायफल' इति लोके । अयं सर्वसाधारणो मुखवासः ॥ ७ ॥ त्वक् 'तज' 'दालचीनी' इति प्रसिद्धा, शठी 'कचूर'

त्वग्भाग १, एला २, मांसि(सी) जटामांसि(सी) ३, शठी ४, अगुरु ५, कुङ्कुम ६, मुस्त ७, श्रीखण्ड ८, जातीफल ९, लवङ्ग १०, कङ्कोल ११, कर्पूरं १२, एतेषां अष्टांशं सुकल्पितं, अतिश्वेतं वंशरोचनं, अतिस्वल्पशर्करासहितं, एतानि आम्ररसैः पिष्ट्वा, भूमिपालानां अयं मुखवासः। पूर्वोक्तमुखवासः सामान्यानाम् ॥ ८ ॥ ९ ॥

**सूक्ष्मैलाकस्तूरीकुष्ठतगरपत्रचन्दनैः सुतनु ।**
**मलयानिलजलवासं रचय भूमिपालतिलकानाम् ॥ १० ॥**
**जलवासः ।**

हे सुतनु ! भूमिपालतिलकानां नृपश्रेष्ठानां, एभिः औषधैः मलयानिलजलवासं रचय । तत् किमौषधम् ? सूक्ष्मैला, कस्तूरी, कुष्ठ, तगर, पत्र, श्रीखण्डसहिताः, नृपाणां जलवासः ॥ १० ॥

**कुष्ठतगरजातीफलकर्पूरलवङ्गकैलाभिः ।**
**वरतनु वासय शीघ्रं पूगफलं भूमिपालानाम् ॥ ११ ॥**
**पूगवासः ।**

हे वरतनु उत्कृष्टतनु, एभिः औषधैः भूमिपालानां पूगफलं शीघ्रं वासय । तत् किमौषधम् ? कुष्ठ, तगर, जातीफल, कर्पूर, लवङ्ग, एलाभिः सहितं, भूपतीनां पूगवासः ॥ ११ ॥

**त्वगगुरुमुस्तकतगरं चौरशठीग्रन्थिपर्णकनखं च ।**
**कस्तूरीसंयुक्तं स्नानीयं तत् प्रशस्यते सद्भिः ॥ १२ ॥**
**स्नानीयचूर्णवासः ।**

सद्भिः सन्तजनैः, एभिः औषधैः युतं स्नानीयं प्रशस्यते । तत् किमौषधम् ? त्वग्, अगुरु, मुस्त, तगरं, चौर, शठी, ग्रन्थपर्णी, पर्णकं पत्रं, नखं, कस्तूरीयुतं,— स्नानीयचूर्णवासः ॥ १२ ॥

---

**पा०**—"'कुष्ठत्वक्पत्र'''मलयजसहितं नूनं रचय महीपालजलवासम् ॥" इति शार्ङ्गधरपद्धतिस्थः पाठः ॥ १० ॥ तगरं चोरं सठी (बी.) ॥ १२ ॥

---

'शटकचोरा' वा इति प्रसिद्धा; कङ्कोलः 'शीतलचीनी' 'कंकोडी' इति वा लोके ॥ ८ ॥ वंशरोचनः 'वांसकपूर' इति भाषायाम् ॥ ९ ॥

**टि०**—सूक्ष्मैला 'गुजराती एलची' 'कागदी एलची' इति भाषायाम् । कुष्ठः 'कठ' इति प्रसिद्धः । मलयानिलं इति नाम यस्य तं जलवासं मलयानिलजलवासम् ॥ १० ॥ चौरः चोरकः ग्रन्थिपर्णभेदः 'भटेउर' इति नेपाले 'थुनेर' इति उत्तरे च प्रसिद्धः । ग्रन्थिपर्णः 'गठिवन' 'कुकुरवद्रा' वा इति प्रसिद्धः ॥ १२ ॥

कस्तूरीकर्पूरं कुङ्कुमचन्दनमुदाहृतं क्रमशः ।
शशिकरवेदकलाकृतभागेन चतुःसमो गदितः ॥ १३ ॥

चतुःसमः ।

कस्तूरी भाग १, कर्पूर २, कुङ्कुम ४, श्रीखण्ड १६, एवं क्रमेण कृतभागेन चतुःसमः गदितः कथितः ॥ १३ ॥

कस्तूरीकर्पूरं चन्दनशैलेयनागागुरुकं च ।
उद्वर्तनमिदमुत्तममविरतसेव्यं नरेन्द्रस्य ॥ १४ ॥

उद्वर्तनम् ।

इदं उत्तमं उद्वर्तनं नरेन्द्रस्य अविरतसेव्यं वारंवारं सेवनयोग्यम् । तत् किमौषधम् ? कस्तुरी, कर्पूर, श्रीखण्ड, शैलेय, नागकेशर, अगुरुकं च—उद्वर्तनम् ॥ १४ ॥

शैलजवाललवङ्गकत्वक्पत्रकसुरभिशिह्लतगरं च ।
मांसीकुष्ठसमेतं चूर्णं क्षितिपालतिलकानाम् ॥ १५ ॥

क्षितिपालतिलकानां भूपालश्रेष्ठानां, इदं चूर्णम् । तत् किम् ? शैलज, वाल, लवङ्ग, त्वक्, पत्र, उत्तमशिह्ल, तगर, मांसी, कुष्ठं च ॥ १५ ॥

कर्पूरागुरुचन्दनमुस्तकपूतिप्रियङ्गु वालं च ।
मांसी चेति नृपाणां योग्या रतिनाथधूपवर्तिरियम् ॥ १६ ॥

कर्पूर, अगुरु, श्रीखण्ड, मुस्तक, पूतिकरञ्ज, प्रियङ्गु, वाल, मांसी च; एतेषां वर्तिः, नृपाणां भूमिपालानां इयं—रतिनाथधूपवर्तिः योग्या ॥ १६ ॥

---

पा०—सिह्ल (बी) ॥ १५ ॥

---

टि०—प्रकारान्तरेणायम्–“ कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च । कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसमम् ॥ इति चतुःसमो गन्धः ॥” इति आयुर्वेदप्रकाशे । शशी कर्पूरम् ॥ १३ ॥ शैलेयं ‘ छलिरा ’ ‘ दगडफुल ’ इति वा ज्ञातम् ॥ १४ ॥ सुरभिशिह्लेति द्वे पृथग्ग्राह्ये; तत्र सुरभिः मुरा एतन्नाम्नैव प्रसिद्धं गन्धद्रव्यं मांसीभेदः ‘ मोरमांसी ’ इति प्रसिद्धम् ॥ १५ ॥ यद्वा, पूतिः गन्धमार्जाराण्डे इति भैषज्यरत्नावलिः । तथा च बृहत्संहितायाः (१६) गन्धयुक्त्यध्यायस्य विवृतौ गन्धद्रव्यनिघण्टौ भट्टोत्पलः—“ पूतिकोशो बिडालाख्यश्चेलिस्तज्जातकाभिधः ।” इति । प्रियङ्गुः ‘ फुलफेन ’ ‘ घउला ’ इति वा प्रसिद्धः ॥ १६ ॥

**नखागुरुशिह्लकवालककुन्दुरुशैलेयचन्दनश्यामाः ।**
**क्रमवृद्धिभागरचिता वर्ती रतिनाथकान्तेयम् ॥ १७ ॥**

**धूपवर्तिः ।**

नख १, अगुरु २, शिह्लक ३, वाल ४, कुन्दुरु ५, शैलेय ६, श्रीखण्ड ७, श्यामा ८, एतेषां क्रमेण वृद्धिभागरचिता इयं रतिनाथकान्ता धूपवर्तिः ॥ १७ ॥

**सुरदारुमरुवमुस्तकलाक्षागुरुशालचूर्णकर्पूरम् ।**
**नृपवासकगृहयोग्या मदनोद्भवदीपवर्तिरियम् ॥ १८ ॥**

देवदारु, मरुवक, मुस्त, लाक्षा, अगुरु, शालपर्णी, कर्पूर, इयं कामदेवोद्भवदीपवर्तिः राजनिवासगृहयोग्या ॥ १८ ॥

**गन्धरसागुरुगुग्गुलुसर्जरसपूतिकर्पूरम् ।**
**श्रीवासशिह्लकचन्दनमित्यपरा दीपवर्तिरियम् ॥ १९ ॥**

**दीपवर्तिः ।**

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे गन्धाधिकारश्चतुर्थः परिच्छेदः ॥ ]

इति श्रीमहाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लविरचितायां नागरसर्वस्वटीकायां गन्धाधिकारश्चतुर्थः परिच्छेदः ॥

---

पा०—'नखगुरुसिह्लक...चन्दनं श्यामा । क्रमवृद्ध...वर्तिः क्षितिनाथकान्तेयम् ॥' इति शार्ङ्गधरपद्धतिस्थः पाठः, तथैव माधवकृतायुर्वेदप्रकाशे च ॥ १७॥ 'सुरदारुमलयमु०...शीलचूर्ण...। नृपवासगेहयोग्या मनोहरा दीपवर्तिरियम् ॥' इति शार्ङ्गधरपद्धतिस्थः पाठः ॥ १८ ॥ 'गन्धरसागिरिकण्डुरुगुग्गुलु...।...सिह्लचन्दन...' इति शार्ङ्गधरपद्धतिस्थः पाठः ॥ १९ ॥ अयं १९ अङ्कितः श्लोकः सटीकपुस्तके नास्ति, तथापि बी. पुस्तके वर्तते, शार्ङ्गधरपद्धतौ च पद्मश्रीकर्तृकत्वेनैव सङ्गृहीतः ॥

---

टि०—कुन्दुरुः शल्लकीनिर्यासः 'गुंदवरोसा' 'ईसस' 'शेरगुन्दर' इत्यादिनामभिः प्रसिद्धः । श्यामा प्रियङ्गुः, तथा च पूर्वोक्ते गन्धद्रव्यनिघण्टौ—"श्यामा प्रियाख्या श्रीसंज्ञा प्रियङ्गुः फलिनी स्मृता ।" इति ॥ १७ ॥ मरुवः मरुवकः आजन्मसुरभिः 'मरुवा' 'गेद' 'मरवो' इति वा प्रसिद्धः; लाक्षा 'लाहि' 'लाख' इति भाषायां प्रसिद्धा; अस्या योजनं वर्णाधानार्थम् । शालचूर्णं शालनिर्यासः 'राल' इति प्रसिद्धः देवधूपः । वासकगृहं अन्तःपुरम् ॥ १८ ॥ गन्धरसः सुगन्धि बोलं, तथा च तत्रैव—"रसं गन्धरसं पिण्डरसं बोलं चलं विदुः ।" इति, अगुरुः, गुग्गुलुः सुप्रसिद्धः; सर्जरसः 'राल'

कलाकलापैश्च युतं समस्तै-
गुर्णैरसङ्केतविदं हि कान्तम् ।
प्रम्लाननिर्माल्यमिवोत्सृजन्ति
गुणाधिका नागरिकास्तरुण्यः ॥ १ ॥

नागरिकास्तरुण्यः, हि यस्मात्, कलाकलापैर्युतं चतुःषष्टिकलाभिः युतं समस्तैः गुणैश्च युतं कान्तं, असंकेतविदं संकेतज्ञानरहितं, उत्सृजन्ति त्यजन्ति । कमिव ? प्रम्लाननिर्माल्यमिव मलिननिर्माल्यपुष्पमिव । कथंभूताः तरुण्यः ? गुणाधिकाः ॥ १ ॥

ततोऽन्यचिन्तां परिहृत्य कामी
यतेत सङ्केतकशास्त्रकेषु ।
सतां हि सम्मानसहस्रभाजां
यूनां वधूधिक्कृतिरेव मृत्युः ॥ २ ॥

ततः तस्माद्धेतोः, अन्यचिन्तां परिहृत्य, संकेतशास्त्रेषु, यतेत यत्नं कुर्वीत । सतां यूनां सन्मानसहस्रभाजामपि सन्मानसहस्रं भजन्तीति तेषां, वधूभिः या धिक्कृतिः क्रियते स एव मृत्युः ॥ २ ॥

नारीसङ्केतकं वक्ष्ये वक्रभाषाङ्गमुद्रयोः ।
पोटलीवस्त्रपुष्पाणां ताम्बूलस्याप्यनुक्रमात् ॥ ३ ॥

---

पा०—अतो (बी.)। हृत्य धीमान् (स. पु.)। सन्मान (स. पु.) ॥ २ ॥ संकेतिकं (बी.)। मुद्रया (बी.)। पोतली (स. पु.) ॥ ३ ॥

---

इति विख्यातः, पूतिः, कर्पूरं, श्रीवासः सरलनिर्यासः 'तार्पिन्' इति भाषायाम्, शिह्लकं, चन्दनं च, एभिर्द्रव्यैर्निर्वर्तिता द्वितीया दीपवर्तिः ॥ १९ ॥ सुगन्धिद्रव्याणां विभिन्नमिश्रणैः बहुविधा गन्धाः संभवन्ति, तेषां प्रस्तारादि बृहत्संहितायां ७६ अध्याये भट्टोत्पलकृततदीयविवृतौ च द्रष्टव्यम् ॥ अयमत्र विशेषः—"अगुर्वादिप्रयोगेषु गन्धयुक्तौ मनीषिभिः। ग्राह्याणि तेषां सत्त्वानि गन्धोत्कटकराणि हि ॥" आदिशब्दाच्चन्दनमुस्तोशीरप्रभृतीनि । पेषणविधौ जलं पुष्पोत्कटसत्त्वजं ग्राह्यं, तदभावे सर्वं यथास्थितमेव । नखादयः संशुद्धा ग्राह्याः ॥" इति सौराष्ट्रदेशोद्भवमाधवविरचिते आयुर्वेदप्रकाशे । एवं यथेप्सितवस्तुनः सत्त्वं पातालयन्त्रेण ग्राह्यम् । सत्त्वाकृष्टेरपरोऽपि प्रकारस्तत एव विज्ञेयः ॥ इति चतुर्थः ॥ ( ॥ ४ ॥ )

टि०—परिच्छेदविषयान् संगृह्णाति नारीति । 'पोटली' 'पोतली' 'पोट्टलिका' 'पोटली' वा वस्त्रावृतं पदार्थजातम् ॥ ३ ॥

वक्रभाषा वक्रोक्तिः, अङ्गमुद्रा अङ्गचारणं, तयोः, नारीसंकेतकं वक्ष्ये वदामि। पोतलीवस्त्रस्थितवस्तुग्रन्थिसंता( ज्ञा ? )नां वस्त्राणां, पुष्पाणां च, ताम्बूलस्यापि च, अनुक्रमेण संकेतं वदामि ॥ ३ ॥

**फलं पुंसि, स्त्रियां पुष्पं, कुलप्रश्नेऽङ्कुरः स्मृतः।**
**दाडिमं तु द्विजे ज्ञेयं, पनसः(सं) क्षत्रिये स्मृतः(तम्) ॥ ४ ॥**

तत्र संकेतमाह। पुंसि पुरुषप्रश्ने फलं ज्ञेयम्, स्त्रियां पुष्पम्, कुले अङ्कुरः, द्विजे दाडिमम्, क्षत्रिये पनसः स्मृतः ॥ ४ ॥

**कदलीजं फलं वैश्ये, तथाम्रं शूद्रजे पुनः।**
**राजपुत्रे द्वितीयेंदुर्धनच्छायस्तु भूपतिः ॥ ५ ॥**

वैश्ये कदलीजं फलं ज्ञेयम्। शूद्रे अस्त्रं रक्तफलम्। राजपुत्रे द्वितीयाया इन्दुः। घनस्य छाया घनच्छायः भूपतिः ज्ञेयः ॥ ५ ॥

**दुःकुले कालपुष्पं स्यात्, सरः सामन्तपुत्रके।**
**मध्यशो यून्यपक्वं स्याद्बाले, पक्वं तु वृद्धके ॥ ६ ॥**

दुःकुले हीनकुले कालपुष्पं श्यामपुष्पं ज्ञेयम्। सामन्तपुत्रे सरः। यूनि मध्याह्नः। बाले अपक्वं स्यात्। वृद्धे पक्वम् ॥ ६ ॥

**ब्राह्मण्यां कुन्दपुष्पं स्याद्राजपुत्र्यां तु मालती।**
**मल्लिका वैश्यपुत्र्यां तु, शूद्रपुत्र्यां तु कैरवम् ॥ ७ ॥**

सुगमत्वान्न लिख्यन्ते। कैरवं कुमुदम् ॥ ७ ॥

**वणिक्पुत्र्यां सरोजं च, महत्यामुत्पलं तथा।**
**कामुके भ्रमरः प्रोक्तः, कामिन्यां चूतमञ्जरी ॥ ८ ॥**

---

पा०—पनसं···स्मृतम् ( शा.प. ) ॥ ४ ॥ कदलीफलकं ( शा. प. )। तथास्त्रं ( स. पु. )। शूद्रके मतम् ( शा. प. )। संपूर्णेन्दुश्च भूपतौ ( शा. प. ) ॥ ५ ॥ पुष्पं च ( स. पु. )। मध्याह्नो ( स. पु. )। मध्याह्ने यून्यपक्वं तु बाले पक्वं च वृद्धके। (शा. प.) ॥ ६ ॥ पुत्र्यां च कैरवम् ( स. पु. ) राजपुत्र्यां च···शूद्रपुत्र्यां च ( शा. प. ) ॥ ७ ॥ °त्पलं स्मृतम् (बी)। कामुकः ( स. पु. ) ॥ ८ ॥

---

टि०—तत्तत्पदार्थदर्शनेन तत्तद्विषयकः प्रश्नः ज्ञेयः, तदुत्तरे वा तत्तत्प्रकाशकः पदार्थः दर्शनीयः इति भावः ॥ ४ ॥ अस्त्रं इति पाठे शोणितं, लक्षणया तद्वद्रक्तं फलम्। अस्मिन् पाठे फलप्रक्रमभंगस्य स्पष्टत्वात् अनुपादेयः सः ॥ ५ ॥ सरः निर्मलत्वस्य द्योतकम्। मध्यशः पक्वापक्वं बालवार्धक्याभावसूचकम् ॥ ६ ॥

वणिक्पुत्र्यां सरोजं पद्मम् । महत्यां मन्त्रिपुत्र्यां उत्पलम् । कामुको भ्रमरः । कामिन्यां आम्रमञ्जरी प्रोक्ता ॥ ८ ॥

**तथाऽऽह्वानेऽङ्कुशश्चापि, प्राकारो वारणे स्मृतः ।**
**छन्नचन्द्रो निशीथिन्यां, दिनेऽछन्नरविः स्मृतः ॥ ९ ॥**

तथा तेनैव प्रकारेण, आह्वाने अङ्कुशः, प्राकारो आवरणः, वारणो हस्ती स्मृतः । निशीथिन्यां छन्नश्चन्द्रः, दिनेछन्नरविः स्मृतः ॥ ९ ॥

**आद्ये यामेऽपि शङ्खः स्यान्महाशङ्खो द्वितीयके ।**
**पद्मस्तृतीयके यामे, महापद्मश्चतुर्थके ॥ १० ॥**

आद्ये यामे प्रथमे प्रहरे अपि शङ्खः स्यात्, द्वितीयप्रहरे महाशंखः, तृतीयप्रहरे पद्मः, चतुर्थप्रहरे महापद्मः स्यात् ॥ १० ॥

**रामस्तु पञ्चमे यामे, विरामः षष्ठ उच्यते ।**
**प्रवरः सप्तमे ज्ञेयः, प्रत्यूषश्च तथाऽष्टमे ॥ ११ ॥**

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे भाषासङ्केतकः पञ्चमः परिच्छेदः ॥ ]

पञ्चमे मासे रामः उच्यते षष्ठे मासे विरामः सप्तमे मासे प्रवरः अष्टमे मासे प्रत्यूषो ज्ञेयः ॥ ११ ॥

इति भाषासङ्केतकम् ॥

---

**पा०**—वारणः ( स. पु. ) । छन्नश्चन्द्रो ( स. पु. ) । छन्नो रविः ( बी. ) ॥९॥ आद्ये यामे तु ( शा. प. ) ॥ १० ॥ पञ्चमे मासे ( स. पु. ) । पञ्चमे ख्यातः...षष्ठकः स्मृतः...श्चाष्टमे स्मृतः ॥ ( शा. प. ) ॥ ११ ॥

---

**टि०**—अङ्कुशः अङ्कुशमुद्रा, सा यथा—" ऋज्वीं च मध्यमां कृत्वा तन्मध्यपर्वमूलतः । तर्जनीं किञ्चिदाकुञ्चेत् सा मुद्राऽङ्कुशसंज्ञिता ॥ " इति । वारणे आगमननिषेधे तु प्राकारः इष्टिकादिरचितवेष्टनाकारं प्राचीरादि दर्शयितव्यः इत्यर्थः । अच्छन्नः अनावृतः रविः विम्बादिगतः प्रत्यक्षो वेति भावः ॥ ९ ॥ यामः प्रहरः सूर्योदयादारभ्य अपरदिनसूर्योदयं यावत् परिमितस्य दिनस्य अष्टमो भागः त्रिघण्टावादनसमयसंमितः । शङ्खादयः शब्दाः निधिवाचकाः प्रयोक्तव्या इत्यर्थः ॥ १० ॥ रामादयः शब्दाः युक्त्या वाक्ये प्रयोक्तव्याः इति भावः ॥ ११ ॥ इति पञ्चमः ( ॥ ५ ॥ )

क्षेमप्रश्ने कर्णलता, कथिता कथनेऽपि सा ।
कचदंशस्तु कामार्त्तावुरः स्नेहे, शिरोऽर्चने ॥ १ ॥

क्षेमप्रश्ने कुशलप्रश्ने कर्णलता हस्तेन स्पर्शनीया, सा कर्णलता कथने अपि कथिता । कामार्त्तौ कचदंशः केशः स्पर्शनीयः, स्नेहे उरः वक्षःस्थले स्पर्शनीयम् । एते पताकया कार्य्याः ॥ १ ॥

मध्यमाऽवसरप्रश्ने तर्जनीपृष्ठयोजिता ।
अवसरेऽञ्जलिर्ज्ञेय आह्वाने कुञ्चिताङ्गुलिः ॥ २ ॥

अवसरप्रश्ने मध्यमाङ्गुली तर्जनीपृष्ठयोजिता । अवसरे सति अञ्जलिर्ज्ञेयः आह्वाने आकारणे स एव अञ्जलिः विपरीतः कुञ्चिताङ्गुलिः ॥ २ ॥

अङ्गुष्ठतर्जनीमध्याः पूर्वदक्षिणपश्चिमाः ।
उत्तराऽनामिका चेति दिशो ज्ञेया अनुक्रमात् ॥ ३ ॥

पूर्वे अंगुष्ठः, दक्षिणे तर्जनी, पश्चिमे मध्यमा, उत्तरे अनामिका; एवं क्रमेण चतस्रो दिशः क्रमात् ज्ञेयाः ॥ ३ ॥

कनिष्ठामूलमारभ्य रेखाः पञ्चदश क्रमात् ।
अंगुष्ठस्योर्ध्वरेखान्ताः स्मृताः प्रतिपदादिषु ॥ ४ ॥

कनिष्ठामूलं आरभ्य अंगुष्ठस्य उर्द्धरेखान्तं अंगुलिं प्रति रेखात्रयं क्रमात् पञ्चदश रेखाः भवन्ति, तेन प्रतिपदाद्याः पञ्चदश तिथ्यो भवन्ति ॥ ४ ॥

शुक्ले वामकरे ज्ञेया असिते दक्षिणे करे ।
यद्यत् स्पृशन्ति कामिन्यस्तस्यार्थं निपुणः स्मरेत् ॥ ५ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे अङ्गसङ्केतकं नाम
षष्ठः परिच्छेदः ॥ ]

---

पा०—कुञ्चिताङ्गुलीः ( स. पु. ) ॥ २ ॥ कामिन्यस्तत्स्थानं निपुनं (स. पु.) ॥ ५ ॥ इत्यङ्गसङ्केतकम् ( स. पु. )

---

टि०—टीकायां पताकया इति हस्ताभिनयविशेषेण । तल्लक्षणं तु भरते-"प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि । कुञ्चितश्च तथाऽङ्गुष्ठः स पताक इति स्मृतः ॥" (९।१७-१८)॥ १ ॥ अवसरप्रश्ने पूर्वार्धे वर्णिता मुद्रा 'चकली' इति विटेषु प्रसिद्धा । अवसरे समागमानुकूलसमयसूचने अञ्जलिः । तल्लक्षणं भरते—"पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः" इति ( ९।१२१ )। यद्वा कुञ्चिता आकुञ्चिता अङ्गुली तर्जनी वा अंगुष्ठवर्जं अन्याः वा ॥ २ ॥ दिक्सूचनमाह । अंगुष्ठेति ॥ ३ ॥ तिथिसंकेतप्रदर्शनमाह कनिष्ठेति ॥ ४ ॥ पक्षप्रदर्शनमाह शुक्ले इति ॥ ५ ॥ इति षष्ठः ॥ ( ६ ॥ )

शुक्लपक्षे वामकरे रेखा कर्त्तव्या। कृष्णपक्षे दक्षिणकरे रेखा कर्त्तव्या। कामिन्यः यत् यत् स्पृशन्ति तत्स्थानं निपुनं( णं ? ) स्मरेत् ॥ ५ ॥

इति अङ्गसङ्केतकम् ॥

---

**स्नेहे सुगन्धिवस्तूनि पूगं खदिरसारकम्।**
**अतिस्नेहे च सूक्ष्मैला जातीफललवङ्गकम् ॥ १ ॥**

स्नेहे सुगन्धिवस्तूनि अथवा पूगफलं खदिरसारकं च। अतिस्नेहे च सूक्ष्मैला अथवा जातीफलं लवङ्गकं च ॥ १ ॥

**स्नेहच्छेदे प्रवालं स्यात्तद्युगं चिरसङ्गतौ।**
**कामज्वरे कटु द्रव्यं, मृद्वीका सङ्गमाशये ॥ २ ॥**

स्नेहछेदे प्रवालं, चिरसङ्गमे तद्युगं प्रवालयुगम्। कामज्वरे कटुद्रव्यं; संगमाशये संगमाशायां, मृद्वीका द्राक्षा ॥ २ ॥

**देहार्पणे तु कर्पासं, जीरं जीवसमर्पणे।**
**भल्लातकफलं भीतौ, भयाभावे हरीतकी ॥ ३ ॥**

देहार्पणे शरीरसमर्प्पणे, कार्प्पासं; जीवसमर्प्पणे जीरम्। भीतौ भये, भल्लातकफलं; भयाभावे अभये हरीतकी ॥ ३ ॥

**सिक्थेन निर्मिता मुद्रा पञ्चाङ्गुलिनखाङ्किता।**
**वेष्टनं रक्तसूत्रेण पोटली परिकीर्त्तिता ॥ ४ ॥**

सिक्थेन मधूच्छिष्टेन मुद्रा निर्म्मिता चिह्नं कर्त्तव्यम्, कथंभूता मुद्रा? पंचाङ्गुलिनखाङ्किता पंचाङ्गुलीनां नखेन अंकिता, रक्तसूत्रेण वेष्टनं, एवं चेत् पोटली परिकीर्त्तिता ॥ ४ ॥

---

पा०—देहार्पणे रक्तसूत्रं जीवो जीवसमर्पणे। ( शा. प. ) ॥ ३ ॥ शिक्थेन··· पोटल्याः परिकीर्तितम्। ( स. पु. ) ॥ ४ ॥

---

टि०—खदिरसारकं ‘खेरसार’ इति भाषायाम् ॥ १ ॥ प्रवालं नवपल्लवं, लक्षणया तच्छेदः इत्यर्थः। “वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे।” इति विश्वलोचनः ॥ २ ॥ जीवः इति पाठे बन्धूकपुष्पं रक्तवर्णं ‘बपोरीया’ इति प्रसिद्धम् तच्च नामसादृश्यात् सङ्केते उपयुक्तम् ॥ ३ ॥ पोटल्यां प्रोक्तान् तत्तद्भावसूचकान् पदार्थान् निवेश्य तस्याः मुद्राकरणमाह सिक्थेनेति। सिक्थं ‘मोम’ इति भाषायाम् ॥ ४ ॥

**मदनासङ्गतः सिक्थः, संरागे रक्तवेष्टनम् ।**
**पञ्चबाणक्षतत्वेन पञ्चाङ्गुलिनखक्षतम् ॥ ५ ॥**

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे पोटलीसंङ्केतकं नाम
सप्तमः परिच्छेदः ॥ ]

शिक्थादिकेन कथं मुद्रा जाता ? तदेवाह । शिक्थः मदनासंगः कामेन आसंगतः, संरागे अनुरागे रक्तवेष्टनं, पञ्चबाणक्षतत्वेन कामप्रहारत्वेन पंचाङ्गुलिनखक्षतम् ॥५॥

इति पोटलीसङ्केतकम् ॥

---

**स्मरेणोद्भिन्नदेहत्वे सच्छिद्रं वस्त्रमुत्तमम् ।**
**संरागे रक्तरागे च रक्त( क्तं ? ) काषायपीतकम् ॥ १ ॥**

स्मरेण कामेन उद्भिन्नदेहत्वे सति सच्छिद्रं छिद्रसहितं उत्तमं वस्त्रम् । संरागे अनुरागे रक्तमेव देयं, रक्तरागे विरागे काषायपीतकं एव देयम् ॥ १ ॥

**छिन्नवस्त्रं तु विच्छेदे, सदशाग्रन्थि सङ्गमे ।**
**एकं स्नेहे तथा चैवोभयस्नेहे तु तद्युगम् ॥ २ ॥**

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे वस्त्रसङ्केतकं
नामाष्टमः परिच्छेदः ॥ ]

विच्छेदे वियोगे छिन्नवस्त्रं, ग्रन्थिसंगमे सदशा दशासहिता । एकस्नेहे एकं वस्त्रं, उभयस्नेहे तद्युगं वस्त्रद्वयमित्यर्थः ॥ २ ॥

इति वस्त्रसङ्केतकः ॥

---

**ताम्बूलबिटकाः पञ्च कीर्त्तिता नरपुङ्गवैः ।**
**कौशलाङ्कुशकन्दर्पपर्य्यङ्कचतुरस्रकाः ॥ १ ॥**

---

पा०—शिक्थः ( स. पु. ) ॥ ५ ॥

पा०—रक्तिरागे ( बी. ) ॥ १ ॥ छिन्नं वस्त्रं ( बी. ) । सदशग्रन्थि (शा. प.) ग्रन्थिः स्यात्सङ्गमेच्छया ( बी. ) ॥ एकस्नेहे ( स. पु. ) । स्नेहे च तद्युगम् ( बी. ) । एकस्नेहे तथा चैकं द्वयोः स्नेहे तु तद्द्वयम् ॥ ( शा. प. ) ॥ २ ॥

---

टि०—सिक्थादीनां भावानाह मदनेति ॥ ५ ॥ इति सप्तमः ( ॥ ७ ॥ )

टि०—देयं इति टीकायां प्रेषणीयं दर्शनीयं वा ॥ १ ॥ इत्यष्टमः ( ॥ ८ ॥ )

टि०—कौशलः कुशलतया सर्वशिरापनयनादिना संपादितः । कन्दर्पः त्रिकोणाकारः१॥

नरपुंगवैः नरश्रेष्ठैः ताम्बूलस्य पंचविटकाः कीर्त्तिताः । तदेवाह—कौशलं शलाकासूत्ररहितं, अंकुशः अंकुशाकारः, कन्दर्पः मध्ये बाणाकारः, पर्य्यंकः शोलकाकारः, चतुरस्रः चतुःकोणाकारः ॥ १ ॥

**कौशलः स्नेहबाहुल्ये, चाहृतावङ्कुशस्तथा ।**
**मदनार्तौ च कन्दर्पः, पर्य्यंकः सङ्गमाशये ॥ २ ॥**

स्नेहबाहुल्ये कौशलं ज्ञेयम् । आहृतौ अङ्कुशः ज्ञेयः । मदनार्तौ कामार्तौ कन्दर्पः । संगमाशये संगमाशायां पर्य्यङ्कः ज्ञेयः ॥ २ ॥

**चतुरस्राभिधानो यो बीटोऽनवसरे सदा ।**
**अपूगपर्णमप्रीतौ, स्नेह एलादिसंयुतम् ॥ ३ ॥**

सदा सर्वदा यः चतुरस्राभिधो वीटः अनवसरे अवसररहिते । अप्रीतौ अपूगपर्णं गुवाकहीनं पत्रम् । स्नेहे स्नेहसहिते एलादिसंयुतम् ॥ ३ ॥

**पृष्ठसंश्लेषपर्णं च विच्छेदे कृष्णवेष्टनं ।**
**मुखसंलग्नपर्णे चाविच्छेदे रक्तवेष्टनम् ॥ ४ ॥**

पृष्ठसंश्लेषपर्णं विपरीतरक्षितपर्णं कृष्णसूत्रवेष्टनं विच्छेदे वियोगे । अविच्छेदे मुखसंलग्नपर्णे पर्णस्य पर्णस्य मुखे मुखं संयोज्य रक्तसूत्रवेष्टनं कार्यम् ॥ ४ ॥

**मध्ये विदारितं पर्णं त्यजने कृष्णवेष्टनम् ।**
**संरक्तपटसूत्रेण स्यूतं प्राणान्तसङ्गमे ॥ ५ ॥**

त्यजने त्यागे, मध्ये विदारितं पर्णं कृष्णवेष्टनं कार्यम् । प्राणव्ययसंगमे रक्तपट्टसूत्रेण स्यूतं सीवनं कृतं ॥ ५ ॥

**निर्भिन्नयोजितं पूगं मध्ये कुङ्कुमपूरितम् ।**
**बाह्ये चन्दनपङ्काक्तमत्यर्थमनुरागतः ॥ ६ ॥**

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे ताम्बूलसङ्केतकं नाम
नवमः परिच्छेदः ॥ ]

---

**पा०**—कौशलं (स. पु.) । कौशलाः स्नेहबहुले (बी.) । वङ्कुशास्त० (बी) ॥२॥
**पा०—पट्ट** ( स. पु. ) ॥ ५ ॥ चन्दनलिप्तं त्यम० ( बी ) ॥ ६ ॥

---

**टि०**—आहृतिः समीपानयनम् । सङ्गमस्य समागमस्य आशये अभिप्राये ॥ २ ॥ पृष्ठसंश्लेषपर्णं एकस्य पर्णस्योपरि अपरस्य तथैव स्थापनम् ॥ ४ ॥ "निर्भिन्नयोजिते" इति पाठः योग्यः, आदौ कलहेन वियुक्ते कालान्तरे तच्छान्त्यादिना पुनः संयोगे । कुंकुमं केशरम् । अत्यर्थमनुरागतः अत्यन्तानुरागे, सप्तम्यर्थः तसिल् ॥६॥ इति नवमः (॥९॥)

निर्भिन्नयोजितं स्थाने स्थाने खण्डखण्डयोजितं पूतं, मध्ये कुङ्कुमेन पूरितं, बाह्ये चन्दनलेपितं, अत्यर्थो अनुरागो भवति ॥ ६ ॥

इति तांबूलसङ्केतः ॥

संरागारक्तिरागेषु रक्तकाषायपिञ्जरैः ।
सूत्रैरस्नेहके कृष्णैः पुष्पमाला प्रगुम्फिता ॥ १ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे पुष्प(माला)सङ्केतकं नाम
दशमः परिच्छेदः ॥ ]

संरागो अनुरागः, अरक्तिः विरागः, रागः अनुरञ्जनं, अस्नेहो अप्रीतिः, एतेषु क्रमेण रक्तकाषायपिञ्जरकृष्णैः सूत्रैः प्रगुम्फिता पुष्पमाला सङ्केतो बोद्धव्यः ॥ १ ॥

इति पुष्पमालासङ्केतः ॥

यदपि न सुलभेह सा मृगाक्षी
सकलकलाकलनासु पण्डिता या ।
तदपि निरवशेषकामशास्त्रा-
भिहितपदेषु मतिं विवर्द्धयेत् (सा) ॥ १ ॥ MISTAKE

सा मृगाक्षी यदपि न सुलभा, तथापि निरवशेषकामशास्त्राभिहितपदेषु मतिं विवर्द्धयेत् ज्ञानं कुर्यात् । कथंभूता मृगाक्षी ? सकलकलाकलनासु समस्तकलाज्ञानेषु पण्डिता निपुणा ॥ १ ॥

कथमपि यदि सङ्गमस्तया स्या-
द्व्रजति तदाहि पराभवं वराकः ।
अविदितयुवतीकृतैकसङ्के-
तक इति रत्नकुमारको यथैव ॥ २ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे सकलसङ्केतकथनं
नामैकादशः परिच्छेदः ॥ ]

---

पा०—[१]संरागा०( वी ) ॥ १ ॥

पा०—१. पण्डिता सा. (स. पु.) २. °युवतिकृतैकभेदः परमिह रत्न° (स. पु.) । संकेतकथनं पञ्चमः ( ने ) ।

---

टि०—संरागः तीव्रो रागः, रागः मन्दः रागः इति भेदः॥१॥ इति दशमः(॥१०॥)

टि०—यद्यपि गीतादिचतुःषष्टिकलाकुशला नायिका दुर्लभैव, तथापि अंगनाभिः

कथमपि कष्टश्रि(श्लि?)ष्टया, तया स्त्रिया, यदि संगमः स्यात् तदा वराकः, पराभवं लज्जां, व्रजति गच्छति । कथंभूतः वराकः ? अविदितयुवतीकृतैकभेदः युवतीकृतसंकेतज्ञानरहितः । तत्र दृष्टान्तमाह, यथा पूर्वं रत्नकुमारः कश्चित्पुरुषः नार्य्याः सङ्केतमज्ञात्वा पराभवं जगामेति ॥ २ ॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां सङ्केतकथनः पञ्चमः ।

---

**मृदुह्रस्वध्वजो यत्र प्रियोऽशक्तो द्रुतच्युतिः ।**
**तत्र स्त्रियश्च काठिन्यात् स तु नीचरतोद्भवः ॥ १ ॥**

यत्र प्रियः स्वामी, अशक्तः, कथंभूतः ? मृदुह्रस्वध्वजः कोमलह्रस्वेन्द्रियः, द्रुतच्युतिः शीघ्रक्षरणः, स्त्रियो महाकाठिन्यात् सः पुरुषः नीचरतोद्भवः नीचशृङ्गारस्य कारणम् ॥ १ ॥

**नारी नीचरतोद्विग्ना स्वामिनं नाशयत्यपि ।**
**श्रूयते चैव कर्णाटे कान्तया निहतः पतिः ॥ २ ॥**

नारी नीचरतोद्विग्ना नीचरतपुरुषात् भयातुरा । अपि संभावनायाम् । पतिं नाशयेत् । कर्णाटे कर्णाटदेशे, कान्तया स्त्रिया, पतिः निहतः इति श्रूयते ॥ २ ॥

---

पा०—"यत्र स्त्रीणां च काठिन्यं तत्र नीचरतं भवेत्" इति रुद्रकृतस्मरदीपिकायां पाठः ॥ १ ॥ नार्यो नीच…द्विषंति पुरुषं क्षणात्" ( स्म. दी. )। कार्णाटि( टी ? ) ( बी. ) ॥ २ ॥

---

कामशास्त्रांगभूतानां संकेतकेशसंस्कारशयनरचनालिंगनप्रकारादीनां कलानां ज्ञानं अवश्यमेव संपाद्यं इति भावार्थः ॥ १ ॥ पञ्चमपरिच्छेदादारब्धस्य संकेतकज्ञानस्य व्यतिरेकेण फलकथनपूर्वकं उपसंहरति कथमिति । तत्र दृष्टान्तमाह रत्नकुमारक इति । अस्य वृत्तं मृग्यम् ॥२॥ इति एकादशः ॥ ( ॥ ११ ॥ )

टि०—नीचरते स्त्रीणां असन्तुष्टत्वात् तत् तासां उद्वेजकं शीलभ्रंशे कारणं च भवति । अतः तन्निवारणाय प्रयोगान् चिकथयिषुः आदौ पुरुषमूलकं नीचरतत्वं वर्णयति मृद्विति । तत्र लिंगस्य मृदुत्वं दृढीकरणेन, ह्रस्वत्वं स्थूलीकरणेन दीर्घीकरणेन वा, पुरुषस्य अशक्तत्वं वाजीकरणेन द्रुतच्युतत्वं च स्तंभनोपायेन नश्यति ॥ १ ॥ नीचरतस्यानिष्टत्वमाह— नारीति । इदं वृत्तं मृग्यं, तथापि यत्तु यशस्तिलकचंप्वां ( ४ आ. )–" श्रूयते…जघान "कबरीनिगूढेनासिपत्रेण चण्डरसा पाण्डु(ण्ड्ये?)षु मुण्डीरम्," इति उक्तं तदेवेदं स्यादिति भाति ॥ "कार्णाटकान्ता" इति पाठे कर्णाटदेशोद्भवा स्त्री, सा च–"तृप्तिं नो याति, शीघ्रं द्रवति न च रते, चण्डवेगा, प्रगल्भा," इति पञ्चसायके ॥ २ ॥

**मृदुसाधनतादीनां शमनाय ततोऽधुना।**
**सिद्धप्रयोगसन्दोहान् कथयामि समासतः ॥ ३ ॥**

मृदुसाधनतादीनां शमनाय नाशाय, अधुना इदानीं, सिद्धप्रयोगसंदोहान् सिद्धप्रयोगसमूहान्, समासतः कथयामि आद्योपान्तेन ॥ ३ ॥

**नवमर्कटिकामूलं छागमूत्रेण पेषयेत्।**
**लेपान्निरन्तरं तस्य लिङ्गं लोहोपमं भवेत् ॥ ४ ॥ दृढीकरणम्।**

नवं नूतनं, मर्कटिकामूलं छागमूत्रेण पेषयेत्, निरन्तरम् लेपात् तस्य जनस्य लिंगं लोहोपमं भवेत् ॥ ४ ॥ दृढीकरणम् ॥

**अश्वगन्धा वचा कुष्ठं बला नागबला तथा।**
**माहिषं नवनीतं च गजपिप्पलिकायुतम् ॥ ५ ॥**
**पिष्ट्वा तेषां विलेपेन स्थूलीकरणमुत्तमम्।**
**कुर्यादादौ यदि स्वेदं मर्दनं च प्रयत्नतः ॥ ६ ॥ स्थूलीकरणम्।**

अश्वगन्धा, वचा, कुष्ठा, बला, नागबला, महिषनवनीतम्, गजपिप्पली, एतानि समभागानि पिष्ट्वा पेषयित्वा, आदौ प्रथमतः स्वेदं कुर्यात्। तदनन्तरं मर्दनं, तत्पश्चात् औषधेन विलेपनं, तेन उत्तमं स्थूलीकरणम् ॥ ५–६ ॥ स्थूलीकरणम् ॥

**नागबलाद्वयमूलं गोक्षुरकं तथाश्वगन्धा च।**
**गोदुग्धेन पिबेत् स हि नारीषु दुर्जयो भवति ॥ ७ ॥**
**बलीकरणम्।**

---

पा०—( दृढीकरणं इत्यादि श्लोकान्ते श्लोकवस्तुसूचकं पदं स. पुस्तके नास्ति। ) ॥४॥ कुष्ठा (स. पु.) ॥५॥ नागबलामूलं (बी.)। गन्धं (स. पु.)। सह (स. पु.)॥७॥

---

टि०—साधनं लिंगम्। सिद्धाः परीक्षिताः। समासतः संक्षेपतः ॥ ३ ॥ मर्कटिका कपिकच्छुका आत्मगुप्ता 'कवचा' इति भाषायाम् ॥ ४ ॥ बला 'बलदाना' 'खिरहटा' वा इति प्रसिद्धा, नागबला 'गंगेटी' 'गुलशकरी' इति वा प्रसिद्धा, गजपिप्पली चव्यफलं 'गजपीपर' इति प्रसिद्धा ॥ ५ ॥ आदौ लिंगस्य स्वेदनं जलबाष्पोष्मणा दूरात् तापेन वा प्रस्वेदमोक्षणं कार्यं येन चर्मछिद्राणां अपावृतत्वात् शीघ्रं औषधप्रवेशः स्यात्, ततः द्रव्येण लेपनं, ततः मर्दनं येन प्रविष्टस्य औषधस्य अंतर्व्यापनं भवेत् ॥ ६ ॥ नागबलाद्वयं बला नागबला च। गोक्षुरकं 'गोखरू' इति प्रसिद्धम्। अश्वगन्धा 'आसन्ध' इति ख्यातम्। 'वा' इति पाठे प्रत्येकं गोदुग्धानुपानेन पेयं, तेन चत्वारः पृथक्प्रयोगाः ॥ ७ ॥

नागबलामूलं, गोक्षुरं, अश्वगन्धं, एतानि सममागानि गोदुग्धेन सह पिबेत् पानं कुर्यात् तदा नारीषु स्त्रीषु दुर्जयो भवति ॥ ७ ॥ बलीकरणम् ॥

**एककरञ्जोदरकृतसधवलशरपुङ्खपारदो नियतम् ।**
**धारयति बीजवेगं पुंसां वदनार्पितो यावत् ॥ ८ ॥**

**शुक्रस्तम्भनम् ।**

एककरञ्जोदरे श्वेतशरपुंख औषधं पारदश्च स्थापयित्वा पुंसां पुरुषाणां मुखार्पितं यावत्, तावद्बीजस्य वेगं ( धारयति ) शुक्रस्य स्तंभं भवेत्, नियतं निश्चितम् ॥ ८ ॥ शुक्रस्तंभनम् ॥

**पारदटङ्कणव्योषकाकमाचीमधुलिप्तं यत् ।**
**नारी स्यन्दति सुचिरं बहुच्छिद्रमिव कलशम् ॥ ९ ॥**

**योनिद्रावणम् ।**

पारद, टङ्कण, व्योषा, का( क )माची, मधु, एतैर्यल्लिप्तं, नारी स्त्री, सुचिरं स्यन्दति स्रवति, यथा बहुजलयुक्तं कलशं छिद्रकृतं भवति तथैव ॥ ९ ॥ योनिद्रावणम् ॥

**अलिपक्षं काकजिह्वा स्वकर्णमलमश्रु बीजरक्तं च ।**
**नयति वशं यां वाञ्छति सुतरामशने विलेपे च ॥ १० ॥**

भ्रमरपक्ष, काकपक्ष, स्वकर्णमल, स्वअश्रु, स्ववीर्य्य, स्वरक्तं च, एतानि औषधानि अशने भोजने विलेपने च दत्वा यां स्त्रियं वाञ्छति तां वशं नयति ॥१०॥

---

**पा०**—पारदष्टङ्कण······माचीमधून्यपि ( बी. ) । ······**बहुवारिवत् छिद्रकृत**कलशम् ॥ ( स. पु. ) ॥ ९ ॥ अलिपक्ष ( बी. )······मलाश्रु ( स. पु. ) । **विलेपने** ( स. पु. ) ॥ १० ॥

---

**टि०**—करञ्जः 'करंज' 'कणझीउं' इति वा प्रसिद्धम् । तस्य बीजं ग्राह्यम् । शरपुंखः 'शरपंखा' 'सरफोका' इति वा प्रसिद्धः । तथा च अन्यत्र–"सितशरपुंखामूले पारदरससंहितमानने निहितम् । एककरञ्जबीजान्तरगं बीजं विधारयति ॥" इति ॥ ८ ॥ व्योषं त्रिकटु शुण्ठीपिप्पलीमरिचानि । काकमाची 'कावळी' इति महाराष्ट्रे ख्याता । योनिद्रावणप्रयोगे बीजं तु–"प्रागेव पुंसः सुरते न यावत् नारी द्रवेद्भोगफलं न तावत् ।" इति । प्रयोगस्तु–"पारदं टंकणं व्यो ( 'घो' )षा काकमाची तथा मधु । लिप्तलिंगश्चिरं नारीं द्रावयेद्रमणः सदा ॥" इति स्मरदीपिकायाम् । घोषा 'सोंफ' 'वरीयाली' इति वा प्रसिद्धा ॥ ९ ॥ "काकजिह्वाऽलिपक्षौ च स्वकर्णमलमश्रु च । रक्तं रेतश्च लेपेन वशीकुर्युर्मनीषिणः ॥" इति स्मरदीपिकायाम् ॥ १० ॥

गोरोचना शूकरशोणितेन
विभाविताऽनेकदिनं प्रयत्नात्।
स्याद्यन्मुखे तत्तिलकं प्रशस्तं
सर्वे जनास्तस्य वशे भवन्ति ॥ ११ ॥

अनेकदिनप्रयत्नात् गोरोचना शूकरशोणितेन विभाविता मर्दिता। तत्तिलकं प्रशस्तं स्यात्। तेन सर्वे जनाः तस्य पुरुषस्य सुखं यथा स्यात्तथा वश्याः भवन्ति ॥११॥

गोरोचना प्रियङ्गुर्मनःशिला नागपुष्पचूर्णं च।
अञ्जयेच्चक्षुरमीभिर्यस्तस्य वशत्वमेति जनः ॥ १२ ॥

गोरोचना, प्रियंगु, मनःशिला, नागपुष्प, एतेषां चूर्णेन यः पुरुषः चक्षुरञ्जेत्, तस्य पुरुषस्य अमीभिः औषधैः जनः वशत्वं एति ॥ १२ ॥

संभोगजं बीजरजो वराङ्गे
तल्लिप्तसंशुष्कसितार्कवर्तिः।
तदञ्जनेनाञ्जितलोचनायाः
सदैव दासत्वमुपैति कान्तः ॥ १३ ॥

वराङ्गसंभोगजं बीजरजः तेन लिप्ता संशुष्कश्वेतार्कवर्तिः, तेन अञ्जनेन अञ्जितलोचनायाः दातुः पुरुषस्य सदैव दासत्वं उपैति ॥ १३ ॥

सुवर्णबीजं सुतजारयुक्तं
तत्पूर्णगर्भं कलविङ्कदेहम्।
तं गोपयेद्भूतदिने श्मशाने
समुद्धरेद्भूतदिनेऽपरस्मिन् ॥ १४ ॥

सुवर्णबीजं पारदः, सुतः जारो यस्याः सुतजारा छागी, तस्या(?) पूर्णगर्भे, कलविङ्कदेहं चटकं, भूतदिने चतुर्दशीदिने, श्मशाने, गोपयेत् खनित्वा स्थापयेत्, अपरस्मिन् भूतदिने समुद्धरेत् ॥ १४ ॥

---

पा०—[१]दिनप्रय (स. पु.)। स्याद्यत्सुखं (स. पु.)। [२]तस्य भवन्ति वश्याः (स. पु.) ॥ ११ ॥ अञ्जेत् (स. पु.) ॥ १२ ॥ [१]मुपैति दातुः (स. पु.) ॥ १३ ॥ तद्गोपये (बी.)…। दिने परेऽस्मिन् (बी) ॥ १४ ॥

---

टि०—"संभोगजं वचा बीजं लिप्त्वा चार्कदलं सितम्। तच्चूर्णाञ्जितनेत्राणामार्यापि वशतां नयेत्" इति स्मरदीपिकायाम् ॥ १३ ॥ सुवर्णस्य पीतधत्तूरवृक्षस्य बीजं,

चूर्णं यदेषां निजबीजयुक्त-
मचिन्त्यमाश्चर्यमहाप्रभावम् ।
यस्योदरान्तः पतितं प्रदत्तं
नूनं स दासत्वमुपैति दातुः ॥ १५ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे औषधप्रयोगो नाम
द्वादशः परिच्छेदः ॥ ]

एषां चूर्णं निजबीजयुक्तं एतन्महाप्रभावं अचिन्त्यं यस्य उत्त(द?)रान्ते पतितं प्रदत्तं वा । दातुः पुरुषस्य नूनं निश्चयं स पुरुषः दातुः पुरुषस्य दासत्वं उपैति ॥ १५ ॥

इति महाराजाधिराजश्रीजगज्ज्योतिर्मल्लभूपविरचितायां
नागरसर्वस्वटीकायां षष्ठः परिच्छेदः ॥

---

शुद्धोऽशुद्धश्च सङ्कीर्णस्त्रिधा भावः प्रकीर्तितः ।
शुद्धोऽपि त्रिविधो मन्दस्तीक्ष्णस्तीक्ष्णतरस्तथा ॥ १ ॥

हावः शृङ्गारभावजः, त्रिविधः, शुद्धः अशुद्धः संकीर्णः प्रकीर्तितः । शुद्धोऽपि त्रिविधः त्रिप्रकारः—मन्दः तीक्ष्णः तीक्ष्णतरः ॥ १ ॥

---

पा०—°चिन्त्यमेतत्तु महा° ( स. पु. ) । यस्योत्त(द?)रान्ते ( स. पु. ) ॥ १५ ॥
पा०—त्रिधा हावः ( स. पु. ) भावः ( शा. पु. ) ॥ १ ॥

---

सुतजारा अत्रा तन्नामिका महौषधिः, इदं द्वयं कलविंकस्य कृष्णचटकविशेषस्य देहस्य गर्भे मध्यभागे निवेशनीयं इत्यर्थः ॥ १४ ॥ इति द्वादशः ( ॥ १२ ॥ )

टि०—एतत्परिच्छेदगतो भावविभागलक्षणोदाहरणात्मको विषयः क्वचित्क्वचित् प्रसिद्धसाहित्यग्रन्थस्थाद्विलक्षणः सन् राहुलादिशाक्यसाहित्यशास्त्रकृन्मतानुगः स्यात् । अपि चात्रत्यविब्बोकलक्षणस्य ( १३।९ ) “ अभिनवगुप्तैस्तूपकृतावपि गर्वादनादरस्तन्व्याः । स्खलनं प्रियस्य संयम [ न ] ताडनमत्राभिधायि विब्बोकः ॥” इति निर्णयसागरमुद्रितसाहित्यदर्पणोद्धृतग-पुस्तकपाठेन प्रायः समानतया तत्पाठस्य प्रामाणिकत्वे अयं तन्मतानुसारी वा स्यादित्यनुमातुं शक्यम् ॥ तत्र भावस्य शुद्धादिभेदत्वं, शुद्धस्यापि त्रिधात्वं, हेलादिषोडशानां हावत्वं, तत्रापि हेला ( ५ )-विच्छित्ति ( ७ )-विब्बोक ( ९ )-विभ्रम ( १३ )-विकृतानां ( २३ ) लक्षणेषु तत्तत्प्रसिद्धलक्षणेभ्यो वैलक्षण्यं, शेषाणां तु तेषु तन्नेति ज्ञेयम् ॥ तत्रादौ पूर्वार्धेन भावं विभज्योत्तरार्धेन शुद्धं भावं विभजति शुद्धेति ॥ १ ॥

ईषत्प्रहसितो मन्दतीक्ष्णस्तु पुलकादयः ।
तीक्ष्णतरस्तु निःश्वासशोषितावयवोऽत्र यः ॥ २ ॥

ईषत् किञ्चित् प्रहसितो हास्यः मन्दः, पुलकादयस्तीक्ष्णः, निःश्वासशोषितावयवः निश्वासेन शोषितः अवयवो यस्य स तीक्ष्णतरः ॥ २ ॥

हेलाविच्छित्तिविव्वोककिलकिञ्चितविभ्रमाः ।
लीला विलासो हावश्च विक्षेपो विकृतं मदः ॥ ३ ॥
मोट्टायितं कुट्टमितं मौग्ध्यं च तपनं तथा ।
ललितं चेत्यमी हावाश्चेष्टाः शृंगारभावजाः ॥ ४ ॥

एताः शृंगारभावजाः चेष्टाः, तत्किमिति ? हेला १ विच्छित्ति २ विव्वोक ३ किलकिञ्चित ४ विभ्रम ५ लीला ६ विलास ७ हाव ८ विक्षेप ९ विकृत १० मद ११ मोट्टायितं १२ कुट्टमितं १३ मौग्ध्यं १४ तपन १५ ललितम् १६ ॥ ३–४ ॥

प्रौढेच्छा याऽभिरूढानां नारीणां सुरतोत्सवे ।
शृंगारशास्त्रतत्त्वज्ञैर्हेला सा परिकीर्तिता ॥ ५ ॥

अभिरूढानां नारीणां या प्रौढेच्छा, कुत्र ? सुरतोत्सवे, शृंगारशास्त्रतत्त्वज्ञैः सा हेला परिकीर्तिता ॥ ५ ॥

तद्यथा—

आसज्य स्वयमेव चुम्बनविधिं, याच्ञां विनाऽऽलिङ्गनं,
तल्पान्ते जघनेन वेपथुमता पर्यायणं जानुनि ।
क्रोधोत्कम्पममर्षयत्यनुनयस्तन्व्याः स्मरक्रीडया,
प्रौढेच्छाभिरतिः प्रियस्य हृदयं हेलाबलात्कर्षति ॥ ६ ॥

---

पा०—ईषत् प्रहसितो ( बी; स. पु. ) प्रकटितो ( शा. ) । पुलकादिभिः ( शा. प. ) । °वयवोदयः ( बी ) । स तु तीक्ष्णतरः श्वास० ( शा. प. ) ॥ २ ॥ विहृतं मदः ( शा. प. ) ॥ ३ ॥ याभिरूणाणां ( बी. ) । प्रौढे वयसि रूढानां नारीणाम् ( शा. प. ) ( अशुद्धः पाठः ) । शृंगारसार० ( बी ) । सा हेला ( शा. प. ) ॥ ५ ॥ **आसह्य क्षणमेव** ( बी; स. पु. ) ( अक्षरभ्रान्तिजः पाठः ) । याञ्चा ( शा. प. ) । पर्यर्पणं ( बी. ) पर्यपितं जानुनोः (शा. प.) । °नुनयत्यस्याः ( शा. प. )। प्रौढेच्छा**विरतिः** ( बी; स. पु. ) प्रौढैकाभिरतिः ( शा. प. ) ॥ ६ ॥

---

टि०—त्रिविधाञ्शुद्धभावान् लक्षयति ईषदिति ॥ २ ॥ षोडशहावानां परिगणनं हेलेति द्वाभ्याम् ॥ ३–४ ॥ अभिरूढा प्रौढा, "तदूर्ध्वमभिरूढा स्यायावत्पंचाशतं पुनः ।"

कया स्मरक्रीडया कामक्रीडया, केन प्रकारेण ? चुम्बनविधिं आसह्य चुम्बन-विधिं कृत्वा, याच्ञां विना प्रार्थनां विना आलिंगनम्, तल्पान्ते कामभोगान्ते, वेपथु-मता कम्पम(व ? )ता, जघनेन, जानूपरि अर्थात् पुरुषस्य जानूपरि पर्यारोहणम्, तन्व्याः स्त्रियः, अनुनयः भावः, क्रोधोत्कम्पं अमर्षयति कारयति ॥ अयं हेला-हावदृष्टान्तः ॥ ६ ॥

प्रसाधनानां दयितापराधा-
द्यदीर्ष्ययाऽनादरतः सखीनाम् ।
प्रयत्नतो वारणमङ्गनाया
विच्छित्तिरेषा कथिता बहुज्ञैः ॥ ७ ॥

दयितापराधात् ईर्ष्या क्रोधेन, सखीनां अनादरतः, अंगनायाः, प्रसाधनानां अलंकाराणां, प्रयत्नतो वारणम्, विच्छित्तिः, बहुज्ञैः पण्डितैः, कथिता ॥ ७ ॥

तद्यथा—

सखि, प्रेयान् स्वामी स्खलितमकरोत्, क्षन्तुमुचितं,
विधत्स्वालङ्कारं; नहि नहि बलादर्पयसि किम् ।
अयि श्रेयश्चिन्त्यं सततमबलाभिः प्रणयिनो,
विभूषां मा मुञ्च प्रतनुमपि विच्छित्तिविषयाम् ॥ ८ ॥

हे सखि, प्रेयान् स्वामी प्रियतमः, स्खलितं अपराधं, अकरोत् । क्षन्तुम् उचितं योग्यं, अलंकारं विधत्स्व । नहिनहि, बलात् किं अर्पयसि । अयि हे सखि, सततं वारंवारं, श्रेयः कल्याणं, प्रणयिनः स्वामिनश्चिन्त्यम्, विच्छित्तिवि-षयां प्रतनुं सूक्ष्मां अपि विभूषां मा त्यज ॥ अयं विच्छित्तिविषयो दृष्टान्तः ॥ ८ ॥

---

पा०—धारणम० ( शा. प. ) ॥ ७ ॥ 'तद्यथा' इत्यत्र 'अयं विच्छित्तिदृष्टान्तः' इति स. पु. पाठः ॥ प्रेयान् का( मी ) ( बी. ) । प्रेयान्त्वा ( शा. प. ) ( अशुद्धः पाठः ) । प्रणयिना ममासीत्तन्वि त्वं''' विषयम् ( शा. प. ) ॥ ८ ॥

---

इत्यत्रैव (१६।३) लक्षिता सा । ( तदूर्ध्वं त्रिंशद्वर्षोर्ध्वम् । ) ॥ ५ ॥ पर्यार्पणं प्रियजानूपरि जघनप्रदेशस्यार्पणं सुरताभिलाषसूचकमित्यर्थः ॥ ६ ॥

अभिमतवस्तूपहृतावपि
गुरुदर्पादनादरस्तन्व्याः ।
स्खलितप्रियस्य संयम-
ताडनमभिधायि विव्वोकम् ॥ ९ ॥

तन्व्याः नार्याः, अभिमतवस्तूपहृतावपि इच्छाविषयीभूतवस्त्वानयनेऽपि, गुरुदर्पात् महाहंकारात्, अनादरः, स्खलितप्रियस्य संयमः नियमः, ताडनं, विव्वोकं अभिधायि नाम ॥ ९ ॥

तद्यथा—

अनास्था वस्तूनामभिमतगुणानामुपहृतौ,
घनो गर्वस्तन्व्या रुषि विहसिताडम्बरविधिः ।
प्रहारः पादाभ्यां, यमनमपि काञ्च्या चरणयोः,
प्रियायाः विव्वोकं तदिदमतिधन्योऽनुभवति ॥१०॥

वस्तूनां अनास्था अनादरः, अभिमतगुणानां आनयने महागर्वः, क्रोधे हास्याडम्बरः, प(पा)दाभ्यां प्रहारः, काञ्च्याश्चरणयोर्नियमः । अयं यो विव्वोककृतः तदिदं अतिधन्यः अनुभवति ॥ १० ॥

स्मितशुष्करुदितहसितत्रासक्रोधश्रमाभिलाषाणाम् ।
साङ्कर्यं प्रियदर्शनहर्षात् किलकिञ्चितं प्राहुः ॥ ११ ॥

······साङ्कर्यं मिश्रता······॥ ११ ॥

---

**पा०—**°पहितावपि ( बी. ) । गुरुगर्वाद० ( शा. प. ) । **संयमस्ताडन०** ( बी; स. पु. ) । स्खलितेऽपि प्रियस्य संयमताडनमित्येव विव्वोकः । ( शा. प. ) ॥९॥ 'तद्यथा' इति सर्वत्र स. पुस्तके नास्ति । 'यथा' इत्येतावत् शा. प. पाठः ॥ रुषि च विहिताडम्बरविधिः ( शा. प. ) । **काञ्च्याश्च०** ( बी; स. पु. ) । कृतायाः विव्वोकं ( स. पु. ) । तदिदमिति ( शा. प. ) ॥ १० ॥ शुष्करुदितमथ हसितक्रोध० (बी.) । सौख्येषु हसितरुदितत्रास० ( शा. प. ) । संघर्षः प्रिय० ञ्चितं ज्ञेयम् ( शा. प. ) । सांकर्यं मिश्रता प्रिय० ( स. पु. ) ( अत्र टीकामूलयोः संमिश्रणं, टीकायां त्रुटिः वा भाति ॥११॥

---

**टि०—**वस्तूनां उपहृतौ अनास्था इत्यन्वयः, प्रियेण प्रीतिदानाय आनीतेषु विशिष्टगुणेषु पदार्थेषु अनादरः तदग्रहणं इत्यर्थः ॥ १० ॥ अत्र दर्शनेपदं सङ्गस्याप्युपलक्षणम् ॥ ११ ॥

तद्यथा—

क्रन्दत्यबाष्पमभये भयमातनोति,
क्रोधं च नाटयति, तत्क्षणमेव हास्यम् ।
आलम्ब्य हर्षमबला किलकिञ्चिताख्यं
हावं विभावयति पुण्यवतोऽन्तिकस्था ॥ १२ ॥

पुण्यवतो जनस्य निकटस्था किलकिञ्चितं हावं विभावयति प्रकाशयति । केन प्रकारेण ? अबाष्पं क्रन्दति । अभये भयं तनोति, क्रोधं च नाटयति प्रकाशयति, तत्क्षणमेव हास्यं; किं कृत्वा ? हर्षं आलम्ब्य ॥ अयं किलकिञ्चितविषये दृष्टान्तः ॥ १२ ॥

क्रोधः स्मितं च, कुसुमाभरणादियाच्ञा,
तद्वर्जनं च, सहसैव विमण्डनं च ।
आक्षिप्य कान्तवचनं लपनं सखीभि-
र्निष्कारणोत्थितगतं बत विभ्रमं तत् ॥ १३ ॥

क्रोधः, स्मितं हास्यं, कुसुमादिप्रार्थना, तस्य पुष्पस्य निषेधं, सहसा तत्क्षणमेव विमण्डनं भूषणं च, कान्तवचनं आक्षिप्य अश्रुत्वा, सखीभिः साकं शयनं, निष्कारणे उत्थाय गम्यते, तत् विभ्रमं बत ॥ १३ ॥

तद्यथा—

आस्तां नाथ शुभं भवे, सखि लता सिक्ता त्वया माधवी,
कान्तं तन्मम संप्रयच्छ कुसुमं, किं वाऽमुना मे फलम् ।
माल्यं निर्मलयामि, मौक्तिकमिदं न्यस्तं त्वया दह्यता-
मित्थं विभ्रमसंभ्रमो मदयति प्रेयांसमेणीदृशः ॥ १४ ॥

---

पा०—रोदित्यबाष्प० (बी) । क्रोधो मनाग्भवति (शा. प.) । भावं प्रकाशयति पुण्यकृतो (बी) ॥ १२ ॥ क्रोधस्मितं (बी; स. पु.) । याच्ञां (शा. प.) । शयनं सखीभिः (बी; स. पु.) । निष्कारणं स्थितगतेन (शा. प.) । °तत्तर्जनं ⋯ विडम्बनं ⋯ लपनं सखीनां निष्कारणेच्छितगतं खलु विभ्रमः स्यात् ॥ (सा. द. ग–पु.) ॥ १३ ॥ शुभे (बी; स. पु.) । आस्तां माद्य भवे शुभे सखि लता न्यस्ता (शा. प.) । मालती (बी.) । कान्ते (बी; स. पु; शा. प.) । तत्सरसे प्र० (बी.) । नाल्पं निर्म० (शा. प.) । प्रेयांस्तु मे तादृशः (बी.) प्रेयांसमेतादृशः (स. पु.) ॥ १४ ॥

---

टि०—अत्र निर्णयसागरमुद्रितसाहित्यदर्पणोद्धृतग–पुस्तकपाठः–" विभ्रमस्त्वरया काले भूषास्थानविपर्ययः । यथाह शाक्यभिक्षुः–' क्रोधः स्मितं च ⋯ याच्ञा तत्तर्जनं च

हे नाथ, भवे संसारे, शुभे कल्याणे, आस्तां तिष्ठतां; हे सखि, माधवीलता त्वया सिक्ता सिंचिता, तत्तस्मात् मम कुसुमं संप्रयच्छ, अमुना कुसुमेन किं मम फलम् । माल्यं अहं निर्मलयामि, त्वया इदं न्यस्तं मौक्तिकं दह्यताम्, प्रेम्रासमेम्य ( प्रेयांसं ? ) ईदृशसंभ्रमः, मदयति आनन्दयति ॥ १४ ॥

**अप्राप्तवल्लभसमागमनायिकायाः**
**सख्याः पुरोऽत्र निजचित्तविनोदबुद्ध्या ।**
**आलापवेषगतिहास्यविलोकनाद्यैः**
**प्राणेश्वरानुकृतिमाकथयन्ति लीलाम् ॥ १५ ॥**

अप्राप्तः वल्लभसमागमो यया नायिकया सा तस्याः, सख्याः पुरः अग्रे, निजचित्तविनोदबुद्धया, आलापः संलापः, वेषः स्वरूपः, गतिः गमनं, हास्यं, विलोकनः, तदाद्यैः स्वामिनः अनुकृतिं सादृश्यं, लीलां आकथयन्ति ॥ १५ ॥

**तद्यथा—**

**वेणीबन्धकपर्दिनी, सिततनुः श्रीखण्डपांसूत्करैः,**
**केतक्येकदलेन्दुभृद्बिसलतान्यालोपवीतिन्यपि ।**
**प्राक् पाणिग्रहणाद्विनोदरभसात् सख्याः पुरो लीलया**
**कुर्वाणाऽनुकृतिं हरस्य दिशतु श्रेयांसि वः पार्वती ॥ १६ ॥**

हरस्य अनुकृतिं सादृश्यं, कुर्वाणा पार्वती वः युष्मभ्यं श्रेयांसि दिशतु ददातु । कस्मिन् समये ? पाणिग्रहणात् प्राक् पूर्वं, विनोदरभसात् सख्याः पुरः अग्रे, वेणीबन्धकपर्दिनी वेणीबन्धः कपर्दः जटाजूटो यस्याः सा, "कपर्दोऽस्य जटाजूटः" इत्यमरः । कथंभूता पार्वती ? श्रीखण्डपंकोत्करैः सिततनुः, पुनः किंभूता ? केतक्येकदलेन्दुभृत् केतक्याः एकदलं केतकीदलं तदेव इन्दुं बिभर्तीति भृत् । पुनः

---

**पा०**—हास्यविकत्थनाद्यैः ( शा. प. ) । °माकलयन्ति ( शा. प. ) ॥ १५ ॥ °खण्डपङ्कोत्करैः ( स. पु. ) । भृच्छशिलता० ( स. पु. ) ॥ १६ ॥

---

सहसैव विडंबनं च ।···लपनं सखीनां निष्कारणेच्छितगतं खलु विभ्रमः स्यात् ॥" इति । तत्र शाक्यभिक्षुस्तु एतद्ग्रन्थकर्ता पद्मश्रीरिति स्फुटमेव ॥ १३ ॥ माल्यं पुष्पस्रजम् । निर्मलयामि मलापनयनेन शुद्धं करोमि ॥ १४ ॥

**टि०**—अस्यैव छायारूपः श्लोकः साहित्यदर्पणे ( परि० ३ ) लीलाया उदाहरणे "मृणालव्यालवलया वेणीबन्धकपर्दिनी । हरानुकारिणी पातु लीलया पार्वती जगत् ॥" इति ॥ १६ ॥

किंभूता ? शशिलता शशिवत् शुक्ला लता शशिलता मध्यपदलोपी समासः, सैव व्यालः सर्पः, तदेव यज्ञोपवीतं यस्याः सा ॥ अयं लीलाविषयो दृष्टान्तः ॥ १६ ॥

**यो वल्लभासन्नगतौ विकारो**
**गत्यासनस्थानविलोकनेषु ।**
**वृथास्मितक्रोधचमत्कृतिश्च**
**विकूणनं चास्यगतं विलासः ॥ १७ ॥**

वल्लभासन्नगतौ कान्तनिकटगमने, एवंप्रकारो यो विकारः स विलासः, तत्किम्? गमनासनस्थानदर्शनेषु वृथा हास्यं, वृथा क्रोधः, वृथा चमत्कारः, आस्यगतं विकूननं मुखसंकोचनम् ॥ १७ ॥

तद्यथा—

**स्खलितबहुलं पादन्यासे, विलोकनमन्यतः,**
**स्थितिरविषये, वक्त्राम्भोजं प्रयाति विकूणनम् ।**
**स्मितमपि मुहुर्व्यर्थः क्रोधो वृथैव चमत्कृति-**
**र्दयितमभिगच्छन्त्यास्तन्व्या विलासरसो ह्ययम् ॥१८॥**

दयितं कान्तं, अभिगच्छन्त्याः अनुव्रजन्त्याः, तन्व्या विलासिन्याः, अयं विलासरसः । तदेवाह—पादन्यासो विफलं यथा स्यात् तथा स्खलति, अन्यतः विलोकितं, अविषये अस्थाने स्थितिः, वक्त्राम्भोजं प्र(या)ति विकून(ण)नं वक्त्रपद्मसंकोचीकरणं, स्मितमपि हास्यमपि हर्षोत्थक्रोधः वृथा एव चमत्कारः ॥ अयं विलासरसविषयो दृष्टान्तः ॥ १८ ॥

**सबाष्पगद्गदालापः सस्मितापाङ्गवीक्षितम् ।**
**प्रेमदाक्षिण्यवृत्तिश्च, तरुण्या हाव उच्यते ॥ १९ ॥**

तरुण्याः अयं हाव उच्यते । तदेव आह—सबाष्पगद्गदालापः साश्रुनेत्रेण गद्गद आलापः, सहासनेत्रान्तवीक्षणं, प्रेमः स्नेहः, दाक्षिण्यं अनुकूलं, तयोर्वृत्तिः ॥ १९ ॥

---

पा०—गतो विकारो (शा. प.) । विकूननं (बी; स. पु.) । चास्यकृतं (शा. प.) ॥ १७ ॥ **स्खलति विफलं पादन्यासो** (स. पु.); स्खलितबहलः पादन्यासः (शा. प.) । **विलोकित**मन्यतः (स. पु; शा. प.) । रुचिरविषये (शा. प. । विकूननं (बी; स. पु.) । स्मितमपि हर्षोत्थक्रोधो (स. पु.) (अशुद्धः पाठः) । रसोदयः (शा. प.) ॥ १८ ॥

M 1 भूतः
C 1 भूतम्

तद्यथा—

प्राप्तेषु शृङ्गाररसाश्रयेषु
हावेषु कामाङ्कुरचिह्नभूतः(तम् ?) ।
उत्पद्यते यत्स्मितवीक्षितोक्त-
मुन्मीलितं बालतया स हावः ॥ २० ॥

बालतया बालस्वभावेन, स हाव उत्पद्यते, शृंगाररसाश्रयेषु हावेषु प्राप्तेषु, यत्स्मितवीक्षिताक्षं उन्मीलितं कामाङ्कुरचिह्नभूतं उत्पद्यते ॥ अयं हावविषयो दृष्टान्तः ॥ २० ॥

विसंष्ठुलावेशमयो विकारो विविधः स्त्रियः ।
तमामनन्ति विक्षेपं मुनयः कपिलादयः ॥ २१ ॥

स्त्रियाः विसंस्थू(ष्ठु)लावेशमयः विविधः विकारः तं कपिलादयो मुनयो विक्षेपं आमनन्ति वदन्ति ॥ २१ ॥

तद्यथा—

धम्मिल्लं बद्धमुक्तं तिलकमसकलं न्यस्तवृत्तं च धत्ते
दृष्टावेकत्र कालाञ्जनमुरसि रणत्किङ्किणीं रत्नकाञ्चीम् ।
अंसोत्क्षिप्तार्द्धहारा क्रमुकरसकलामात्रशेषाधरान्ता
कान्ताविक्षेपमित्याद्यपि हरति मनो यत्नरुद्धोरुवासः ॥२२॥

---

पा०—कामाङ्कुश (बी) । यः स्मित० ( शा. प. ) ॥ २० ॥ विसंस्थूला ( बी; स. पु; शा. प. ) । स्त्रियाः ( स. पु. ) । °मया'''रा'''धाः'''(बी) ॥ २१ ॥ मशकलं ( टी. पा. ) । °किणी'''काञ्ची ( बी; स. पु. ) । हारक्रमुकफलरसा रञ्जितैकाधरान्ता ( शा. प. ) ( अशुद्धः पाठः ) । धमिहरति मनाक् स्रस्तरेखोस(रु ?)वासाः (बी.) । कान्ता विक्षेपभावादपहरति मनः स्रस्तरुद्धोरुवासाः ( शा. प. ) ( समीचीनोऽयं पाठः ) ॥ २२ ॥

---

टि०—हावेषु हावसामान्येषु शृंगारभावजासु चेष्टासु इत्यर्थः । कामाङ्कुरस्य संभोगेच्छाविकासस्य । उक्तं वचनम् । उन्मीलितं विकसितम् । बालतया मुग्धतया ॥ अस्योदाहरणत्वं चिन्त्यं, लक्षणतुल्यत्वात् ॥ २० ॥ अत्र निर्णयसागरमुद्रितसाहित्यदर्पणोद्धृतग्रपुस्तकपाठस्तु—" अन्यथा वेषविन्यासो विकाराद्यो भवेत्स्त्रियाम् । तमामनन्ति विक्षेपं श्रीशाल्य(क्य) कपिलादयः ॥" इति ॥ तत्र शाक्यपदेन एतद्ग्रन्थकर्ता पद्मश्रीरुद्दिष्ट इति भाति ॥ अत्रोक्तः कपिलाचार्यः क इत्यद्यावध्यज्ञातम् ॥ २१ ॥ एतदीयस्य साहित्यदर्पणीयो-

इत्याद्यपि कान्ताविक्षेपं मनो हरति । तदेवाह,–धम्मिल्लं केशं बद्धमुक्तं किञ्चित् बद्धं किञ्चिन्मुक्तं, द(ध?)त्ते सर्वत्रान्वयः, अशकलं अखण्डितं तिलकं न्यस्तवृत्तं विपरीतेन न्यस्तं, एकत्र दृष्टौ एकचक्षुषि, कालाञ्जनं, उरसि वक्षःस्थले, रणत्किंकिनी(णी) रत्नकाञ्ची शब्दायमाना रत्नक्षुद्रघण्टिका, अंसे बाहुमूले, अर्धहारा उत्क्षिप्ता, अधरान्ता क्रमुकरसकलामात्रशेषा गुवाकरसमात्रशेषा। कथंभूतं कान्ताविक्षेपं ? यत्नरुद्धोरुवासः ॥ अयं विक्षेपविषयो दृष्टान्तः ॥ २२ ॥

**वाच्यानां च पदार्थानां ज्ञानेऽपि यदभाषणम् ।**
**नायकेषु मृगाक्षीणां विकृतं तत् प्रकीर्तितम् ॥ २३ ॥**

मृगाक्षीणां ज्ञानेऽपि अवाच्यानां पदार्थानां नायकेषु यदि भाषणं, तद्विकृतं प्रकीर्तितम् ॥ २३ ॥

**तद्यथा—**

**कण्ठे क एष तव, वल्लभ नूपुरोऽयं,**
**तत्पादभूषणमयं वलयस्तदानीम् ।**
**इत्यादि वाच्यमभिभाव्य वचो मृगाक्ष्या**
**ज्ञानेऽपि तद्विकृतमुत्सुकतां तनोति ॥ २४ ॥**

---

**पा०—अवाच्यानां पदार्थानां ज्ञानेऽपि यदि भाषणम्।** (स. पु.)। विहृतं (शा. प.) (अस्य ह्यावस्य स्थाने केषुचित् ग्रन्थेषु 'विहृतं' इति व्यवहारो दृश्यते ॥ २३ ॥ वलयस्त्वि० (बी)। इत्याद्यवाच्य ... गाक्षी (स. पु.); ०मतिभाव्य (बी.); इत्यादिवाच्यमवि० (शा. प.)। तद्विहृत० (शा. प.) ॥ २४ ॥

---

दाहरणस्य पूर्वार्धं तु–"धम्मिल्लमर्धमुक्तं कलयति तिलकं तथाऽसकलम् ।" इति प्रकृतपद्यप्रथमपादांशस्य छायारूपम् । पूर्वोक्तग–पुस्तकपाठस्तु–"चकार काचित् स्मितचन्दनाङ्के (ङ्का ?) काञ्चीकलापं स्तनभारपृष्ठे । प्रियं प्रति प्रेषितचित्तवृत्तिर्नितम्बबिम्बे चपलं च हारम् ॥" इत्यपि मूलपद्यांशानामनुगामी ॥ मूले कालाञ्जनं कज्जलम् । क्रमुकेत्यादि–विक्षेपात्ताम्बूलभक्षणं विस्मृत्य केवलं पूगचूर्णमेव चर्वितमिति भावः ॥ २२ ॥

टि०—अन्यत्र स्त्रीणां सत्त्वजेषु भावादिष्वलंकारेष्वेको विहृतमिति संज्ञितः । तच्च "प्राप्तकालं न यद्ब्रूयाद्व्रीडया विहृतं हि तत् ।" (२।४२) इति दशरूपके लक्षितम् । इदं लक्षणं कालोपलक्षितं, प्रकृतग्रन्थस्थं तु द्रव्यज्ञानोपलक्षितं, तेन विकृतस्य विहृताद्भेदः ॥ २३ ॥ नायकनायिकयोरुक्तिप्रत्युक्तिरूपं पूर्वार्धं कण्ठे इति । कंठे इति नायकस्य उक्तिः, वल्लभेति नायिकायाः, तदिति नायकस्य, अयमिति नायिकायाः । हारमपह्नुत्य तस्य नायिकया गोलत्वसाम्येन नूपुरवलयादिना वक्रोक्तिः ॥ २४ ॥

हे वल्लभ कण्ठे एष अयं नूपुरः कः, अयं वलयः तदानीं पादभूषणं, मृगाक्षीज्ञाने इत्यादि अवाच्यं वचः अभिभाष्य, तद्विकृतं उत्सुकतां तनोति । अयं विकृतविषये दृष्टान्तः ॥ २४ ॥

**मधुपानमदप्रायस्तारुण्यातिशयोद्भवः ।**
**विकारो यो वरस्त्रीणां तं वदन्ति मदं बुधाः ॥ २५ ॥**

वरस्त्रीणां, तारुण्यातिशयः यौवनातिशयः, विकारः, मधुपानमदप्रायः तुल्यः, बुधाः पण्डिताः, मदं प्राहुः ॥ २५ ॥

तद्यथा—

**आलापः स्मितकौमुदीसहचरो, दृष्टिः प्रहर्षोल्लसा,**
**भ्रूर्नृत्याध्वरदीक्षिता, चरणयोर्न्यासः समे भङ्गुरः ।**
**वेशेषु क्षणिकस्पृहा, मदविधावद्वैतवादाश्रय-**
**स्तन्व्या नैकविकारभूर्मधुमदप्रायो मदः स्फूर्जितः ॥२६॥**

तन्व्याः अनेकविकारभूः स्थानं मदः, स्फूर्जितः जातः; कथंभूतो मदः ? अद्वैतवादाश्रयः—अद्वैतं द्वितीयराहित्यं, आश्रयति, अहमेवेत्यर्थः । केन प्रकारेण ? आलापः कथाप्रसंगः, स्मितमेव कौमुदी ज्योत्स्ना, तस्याः सहचरः; दृष्टिः प्रक(ह)र्षेण आनन्देन, उल्लसा क्षुभिता; भ्रूः नृत्ययज्ञदीक्षिता, चञ्चलेत्यर्थः; समे समाने चरणयोर्न्यासः भंगुरः वक्रः; मदविधौ अहंकारविधौ, वेशेषु क्षणिकस्पृहा ॥ अयं मदविषयो दृष्टान्तः ॥२६॥

**दयितस्य कथारम्भे साङ्गभङ्गविजृम्भणम् ।**
**कर्णकण्डूयनं स्त्रीणां मोट्टायितमुदीरितम् ॥ २७ ॥**

---

पा०—मधुपानमदे (शा. प.) । विकारो यौवने स्त्रीणां (सा. द. ग-पु.) ॥ २५ ॥ प्रहर्षोज्ज्वला ( शा. प. ) । मदविधेर्बन्धो न वादाश्रयः ( शा. प. ) ( अशुद्धः पाठः ) । स्फूर्जति ( शा. प. ) । दृष्टिः प्रहर्षोल्लसद्भ्रूनृत्या···वेषेषु क्षणिकाः स्पृहा···वादश्च ते त्वद्धया-नैकविकारभूर्मधु···स्फूर्जति ॥ ( सा. द. ग-पु. ) ॥ २६ ॥ स्वाङ्गभङ्गविजृम्भितम् (बी) । °यितमुदाहृतम् ( शा. प. ) ॥ २७ ॥

---

टि०—पूर्वोक्तसाहित्यदर्पणीयग-पुस्तके इदमेव मदलक्षणमुक्तम् । तत्र तृतीयपादे 'विकारो यौवने स्त्रीणां' इति पाठभेदः ॥ २५ ॥ वेशेषु इत्यादि वस्त्रापगम इति भावः । पूर्वोक्तसा० द० ग-पुस्तकेऽयं श्लोक उदाहरणान्तरत्वेनोद्धृतः ॥ २६ ॥ मोट्टायितोदाहरणं साहित्यदर्पणे यथा—"सुभग त्वत्कथारम्भे कर्णकण्डूतिलालसा । उज्जृंभवदनाम्भोजा भिनत्त्यङ्गानि साऽङ्गना ॥" २७ ॥

स्त्रीणां दयितस्य कथारंभे साङ्गभङ्गविजृंभणं मोट्टायितं उदीरितं, कर्णकण्डूयनं च मोट्टायितमुदीरितम् ॥ २७ ॥

तद्यथा—

तस्याङ्घ्रिद्वितयं नमन्ति मुनयोऽसावेककः सर्व-
वित्तं मृत्युञ्जयमामनन्ति विबुधाः सोऽद्याप्यपाणिग्रहः ।
इत्याकर्ण्य कथां हरस्य विजयापार्श्वे विवाहात् पुरा
भंक्त्वाऽङ्गानि विजृंभितं, गिरिभुवो मोट्टायितं पातु वः॥२८॥

गिरिभुवः मोट्टायितं वः युष्मान् पातु । किं कृत्वा ? विवाहात्पुरा विजृम्भितं यथा स्यात् तथा अंगानि भंक्त्वा, पुनः किं कृत्वा ? विजयासखीपार्श्वे इति कथारहस्यं आकर्ण्य श्रुत्वा, इति किम् ? मुनयः तस्यांघ्रिद्वितयं नमन्ति, कः सर्ववित्तं न सेवेत, विबुधाः देवाः यं मृत्युञ्जयं आमनन्ति, तस्य महादेवस्य पाणिग्रहः ॥ अयं मोट्टायितविषयो दृष्टान्तः ॥ २८ ॥

केशस्तनादिग्रहणे हर्षादप्रतिमे सुखे ।
दुःखाविष्करणं तन्व्या यत्तत्कुट्टमितं मतम् ॥ २९ ॥

*तन्व्याः स्त्रियाः, केशस्तनादिग्रहणे हर्षादप्रतिमे उत्तमे सुखे, यद्दुःखाविष्करणं तत्कुट्टमितं मतम् ॥ २९ ॥*

तद्यथा—

किं कान्त निर्दयतरं भुजकन्दलीभ्यां
द्वाभ्यां निपीडयसि मां, न सहिष्णुरस्मि ।
वामभ्रुवामिति सुखेष्वपि दुःखभाजां
धन्यः शृणोति यदि कुट्टमिताक्षराणि ॥ ३० ॥

अभिमुखेषु अपि दुः(ख)भाजां वामभ्रुवां स्त्रियां (स्त्रीणां ?) कुट्टमिताक्षराणि

---

पा०—मुनयः सेवेत कः ( स. पु. ); नमन्ति विबुधाः स त्वेककः (शा. प.) । 'मामनन्ति मुनयः ( शा. प. ) । तस्याद्य पाणिग्रहः ( स. पु. ); सोऽद्यापि पाति व्रतम् ( शा. प. ) । कथा···पुरो ( स. पु. ) । गिरिसुता ( बी ) ॥ २८ ॥ हर्षादिभ्रमिते मुखे ( शा. प. ) ॥ २९ ॥ निर्दयमयं ( बी; स. पु. ) । गाढं निपीड० ( शा. प. ) । तन्न सहि० (बी) । वामभ्रुवामभिमुखे० ( स. पु. ) ॥ ३० ॥

---

टि०—विजयेति पार्वत्याः सख्या नाम ॥ २८ ॥

धन्यः शृणोति, तदेव किम्? हे कान्त निर्दयं यथा स्यात्तथा द्वाभ्यां भुजकन्दलीभ्यां किं मां निपीड(य)सि, अहं न सहिष्णुरस्मि ॥ अयं कुट्टमितविषयो दृष्टान्तः ॥ ३० ॥

**मुक्ताफलं तरोः कस्येत्यादि यत् कृत्रिमं वचः ।**
**वल्लभानां पुरः प्रोक्तं, मौग्ध्यं वदत तद्बुधाः ॥ ३१ ॥**

हे बुधाः हे पण्डिताः, तन्मौग्ध्यं वदत; वल्लभानां पुरः, कस्य तरोः मुक्ताफलं इत्यादि यदारिमं (?) वचः ॥ ३१ ॥

**तद्यथा—**

**के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः ।**
**नाथ मत्कङ्कणे न्यस्तं येषां मुक्ताफलं फलम् ॥ ३२ ॥**

हे नाथ, के द्रुमाः, क्व वा ग्रामे सन्ति, केन प्ररोपिताः, येषां फलं मुक्ताफलं मत्कङ्कणे न्यस्तम् ॥ अयं मौग्ध्यविषयो दृष्टान्तः ॥ ३२ ॥

**नागच्छति प्रियतमे प्रहरार्धमात्र-**
**मुद्वेगजं विविधचेष्टितमङ्गनायाः ।**
**सख्याः पुरः श्वसनरोदनमात्मभाग्य-**
**निन्दादिकं कविवरास्तपनं वदन्ति ॥ ३३ ॥**

*कविवराः तपनं वदन्ति, प्रहरार्धमात्रं प्रियतमे नागच्छति सति, अङ्गनायाः उद्वेगजं विविधचेष्टितं; किं चेष्टितं ? सख्याः पुरः श्वसनरोदनं आत्मभाग्यनिन्दादिकं च ॥ ३३ ॥*

**तद्यथा—**

**नायाते प्रहरार्धमेव दयिते भङ्क्त्वा नितम्बे मिथः**
**संसक्ताऽङ्गुलिजालमध्यमधुना सख्यः कृतार्था इति ।**
**व्याहारः स्वपनं मुहुः पुनरिदं गौर्यर्थनाभ्यर्चनं**
**तन्वङ्ग्यास्तपनं तनोति कृतिनः प्रेमाणमुच्चैरपि ॥ ३४ ॥**

---

पा०—°त्यादि यदारिमं ( ? ) ( स. पु. ) । मौग्ध्यं तत्सुधियो विदुः ( शा. प. ) ॥ ३१ ॥ क्व चाग्रामे (शा. प. ) । नाथ मद्भूषणे ( शा. प. ) मत्कङ्कणन्यस्तं ( सा. द. ) ॥ ३२ ॥ विधिविचेष्टित ( शा. प. ) ॥ ३३ ॥ जालबद्ध ( स. पु. ) । व्याहारं श्वसनं ( शा. प. ) । °रियं ( स. पु. ); गौर्याद्यनभ्यर्थना (बी) °रिदं गौर्याद्यनभ्यर्चनं ( शा. प. ) । तमोऽतिकृतिनः प्रेमान० ( स. पु. ) ( अशुद्धः पाठः ); प्रेमाणमुच्चैस्तराम् ( शा. प. ) ॥ ३४ ॥

---

टि०—"अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः । वल्लभस्य पुरः प्रोक्तं

अतिक्रतिनः तन्वङ्ग्याः तपनं तमः उच्चैः प्रियमानं, करो(ती ?)त्यन्वय (यः।?) न हि क्रियारहितं वाक्यमस्ति। दयिते प्रहरार्धमेव नायाते, मिथः एकान्ते, नितंबं भंक्त्वा, संसक्ताङ्गुलिजालबद्धं यथा स्यात्तथा, सख्यः अर्था पीडा कृता! व्याहारः विगतो आहारः व्याहारः, मुहुः वारंवारं, स्वपनं श्यं(?) पुनः गौरी इति अर्थनार्चनं अर्थात् सखीषु॥ अयं तपनविभ्रयो दृष्टान्तः ॥ ३४॥

भ्रूनेत्रादिक्रियाशाली सुकुमारविधानतः।
हस्तपादाङ्गविन्यासस्तरुण्या ललितं विदुः॥ ३५॥

तरुण्याः सुकुमारविधानतः भ्रूनेत्रादिकियाशाली हस्तपादाङ्गविन्यासः ललितं विदुः॥ ३५॥

तद्यथा—

स्कन्धाश्रितैकमणिकुण्डलमुन्नतैक-
भ्रूवल्लि साचिविनिवेशितदृष्टिपातम्।
चेतो न कस्य ललितं हरति प्रियाया
हासो यतोऽशुकनिरुद्धरदेन्दुकान्तः॥ ३६॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे हावनिर्देशो नाम त्रयोदशः परिच्छेदः॥ ]

---

पा०—शालि ( बी )॥ ३५॥ स्कन्धार्पितैक० ( शा. प. )। हासोद्धतांशुकनिरुद्धमुखेन्दुकान्तम् ( शा. प. ) ( अयमपि पाठः समीचीनः )॥ ३६॥

---

मौग्ध्यं तत्तत्त्ववेदिभिः॥" ( ३।१०७ ) इति साहित्यदर्पणे॥ विकृते नायिकाया अज्ञानादिवोत्तरं, मौग्ध्येऽज्ञानादिव प्रश्न इति विकृतमौग्ध्ययोर्भेदः॥ ३१॥ इदमुदाहरणं साहित्यदर्पणकारेणोद्धृतम्॥ ३२॥ अङ्गुलिजालमध्यं मिथो नितम्बे भंक्त्वेत्यन्वयः, नितम्बे हस्तं ताडयित्वेत्यर्थः। एवं निराशाहतानां स्त्रीणां समुदाचारः। सख्यः कृतार्थाः प्रियानागमनेन तत्सन्निधिलाभादिति भावः। व्याहारः वाक्यम्॥ ३४॥

टि०—यतः ललितात्, अंशुकेन वस्त्राञ्चलेन निरुद्धा रदा दन्ता इन्दुकान्ताश्चन्द्रकान्तमणय इव येन तादृशो हासः स्मितं प्रसरति इत्यर्थः॥ ३६॥ अस्य हावनिर्देशस्य प्रसिद्धलक्षणादिकं मत्कृतायां कुट्टनीमतदीपिकायां ४७७–४७९ आर्याव्याख्याने द्रष्टव्यम्॥ मूले अशुद्धसंकीर्णभावयोर्लक्षणे नोक्ते। ते च–"अशुद्धः प्रकटो ग्राम्यो नर्तकस्येव यः। कितवस्नेहसमः संकीर्णः॥" इत्यन्यत्र॥ इति त्रयोदशः॥ ( ॥ १३ ॥ )

प्रियायाः ललितं कस्य मनो न हरति, यतः स्कन्धाश्रितैकमणिकुंडलं स्कंधे आश्रितं मणिकुण्डलं यत्र तत्, उन्नता एका भ्रूवल्ली, साचि तिर्यक् विनिवेशितं दृष्टिपातं यत्र तत्, हासः अंशुकनिरुद्धरदेन्दुकान्तः वस्त्रेण निरुद्धः दशनचन्द्रकान्तो यत्र तत् ॥ अयं ललितविषयो दृष्टान्तः ॥ ३६ ॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां हावनिर्देशो नाम सप्तमः परिच्छेदः ॥

---

**परिणाहारोहाभ्यां षण्णवद्वादशाङ्गुलैर्गुह्यैः ।**
**शशवृषभाश्वाः पुरुषा हरिणी वडवेभिका नार्यः ॥ १ ॥**

परिणाहारोहाभ्यां विशालदीर्घाभ्यां, षडंगुलनवांगुलद्वादशांगुलैः, गुह्यैरिन्द्रियैः, शशवृषभअश्वाः पुरुषाः । नार्यः स्त्रियः, हरिणी, वडवा अश्वा, इभिका हस्तिनी ॥ १ ॥

**सुवचनसमदन्ताः कान्तिमन्तः प्रहर्षा**
**अविरलकरशाखा वर्तुलास्यं वहन्तः ।**
**चरणजघनहस्ते कर्णदेशे च कार्श्यं**
**सुरभिरतजलाढ्या मानिनस्ते शशाः स्युः ॥ २ ॥**

ते पुरुषाः शशाः स्युः, ते के ? चरणजघनहस्ते कर्णदेशे च कार्श्यं कृशता, कथंभूताः शशाः ? सुवचनसमदन्ताः, पुनः किंभूताः ? कान्तिमन्तः, पुनः किंभूताः ? प्रहर्षाः, अविरलकरशाखा अविरलाङ्गुलयः, वर्तुलास्यं वहन्तः वर्तुलमुखाः, मानिनश्च॥२॥

**स्थौल्यं गलस्य ललितां गतिमावहन्त**
**आरक्तहस्तचरणं स्थिरपक्ष्मलाक्षि ।**
**कूर्मोदरं मृदुगिरं च, सुपीवराङ्गा**
**मेदस्विनश्च सुभगा वृषभा भवेयुः ॥ ३ ॥**

---

पा०—ललिता गतिरा० ( स. पु. ) । मृदु शिरश्च ( स. पु. ) ॥ ३ ॥

---

टि०—परिणाहः स्त्रीवराङ्गविषयक उच्छ्रयः, निम्नत्वमिति यावत् । आरोहः दीर्घत्वमुच्छ्रयो वा । वडवा अश्वी । इभिका हस्तिनी । षडङ्गुलादीनि विशिष्टलक्षणानि ॥१॥ सामान्यलक्षणान्याह सुवचनेति । करशाखाः अङ्गुल्यः । कार्श्यं कृशता । अनङ्गरङ्गे ( ३।१६ ) त्वत्र श्यामतागुण उक्तः, तदशुद्धं भाति, जघनस्थौल्ये प्रायः कामाधिक्यदर्शनात् । सुरभिरतजलाढ्याः- इदं विशेषणं रतिरहस्येऽपि ( ३।३१ ), सुगन्धिमदनस्यन्दा इति अनङ्गरङ्गे ( ३।१६ ), सुगन्धिवीर्यवन्त इत्यर्थः । इदमपि विशिष्टं लक्षणम् । शशानां लघु स्वल्पं

ते वृषभा: भवेयु:, ते के? येषां गले स्थौल्यं, ललिता गति:, किंभूता: ? आरक्तहस्तचरणं आवहन्त:, पुन: किंभूता: ? स्थिरपक्ष्मलाक्षि आवहन्त:, पुन: किंभूता: ? कूर्मोदरं मृदु शिरश्मश्रु आवहन्तः, पुनः किंभूता: ? पीवराङ्गा: गौराङ्गा:, मेदस्विन: स्थूला:, सुभगा भाग्यवन्त: ॥ ३ ॥

दीर्घै: कृशैर्वदनकर्णशिरोभिरोष्ठै:
सान्द्रै: शिरोरुहचयै: कुटिलाङ्गजङ्घा: ।
दीर्घाङ्गुलीजलदघोषविलोलनेत्रै:
पीनोरुशीघ्रगमनै: सुनखा: स्युरश्वा: ॥ ४ ॥

एभिर्लक्षणैरश्वा: स्यु:, कै:कै: ? वदनकर्णशिरोभिरोष्ठै:, दीर्घै: कृशै:; शिरोरुहचयै:, सान्द्रै: घनै:; दीर्घाङ्गुलीजलदघोषविलोलनेत्रै:, पुन: कै: ? पीनोरुशीघ्रगमनै:, पुनः किंभूता: ? सुनखा: शोभननखा: ॥ ४ ॥

ललितगमना तन्वी श्यामा हिमद्युतिशीतला
विकटदशना मन्दालापा सुसान्द्रशिरोरुहा ।
समधिककफा स्वल्पाहारा सुगूढशिरोस्थिका
सुरभिसुरताढ्या च स्निग्धानना हरिणी भवेत् ॥ ५ ॥

इयं हरिणी भवेत्, किंभूता ? ललितगमना शोभनगमना, तन्वी क्षीणा, श्यामा, हिमद्युतिश्चन्द्रकिरणस्तद्वच्छीतला, विकटदशना विकटदन्ता, मन्द: कुत्सितं

पा०—सुरता प्रश्नि० ( बी. ) ॥ ५ ॥

वा रतमित्यपि ॥ २ ॥ कूर्मोदरं कच्छपपृष्ठवत् उन्नतं उदरं नाभ्यधोभागः, "कूर्माकारोदरं" इत्यर्थ इति काञ्चीनाथकृतरतिरहस्यटीकायाम् (३।३२) ॥ अत्र "सक्षारमेदोधिकाः" इति रतिरहस्ये ( ३।३३ ) अधिकं लक्षणं, एतत्पाठश्च पूर्वापरलोचनया 'सक्षारमेढ्रोदकाः' इति स्यात्, क्षारगन्धिवीर्यवन्तः इति च तदर्थः ॥ एतेषां मध्यवेगः इति पंचसायकः (४२) ॥ ३ ॥

टि०— "नवनीतशीतबहुलक्षारस्मराम्बुद्रवाः" इति रतिरहस्ये ( ३।३५ ), "भूरिक्षारविगन्धिमन्मथजलप्रायाः" इति च अनङ्गरङ्गे ( ३।१९ ) अपरं विशिष्टलक्षणम् ॥ इमे चण्डरता इति अनङ्गरङ्गपञ्चसायकयोर्मतम् ॥४॥ सुरभिसुरताढ्या—सुरभिसुरतजला इत्यर्थः, "कुसुमसुरभिरतिसलिला" इति रतिरहस्ये ( ३।२१ ), "बिभ्रत्यम्बुजचारुगन्धि मदनस्यन्दं" इति च ( अ. रं. ३।२१ ) । अनेनास्याः पद्मिनीत्वं सुचितं, यथोक्तं पद्मिनीलक्षणे ( रतिरहस्ये १।११ ) "सुरतपयसि यस्याः सौरभं दिव्यमङ्गे ।" इति ॥ बाह्ये तु इयं 'पीनोरुकामालया' ( अ. रं. ३।२० ), शारीरगुणे 'शीतोष्णा,' मानसगुणे तु 'सुरतलंपटा' (र. र. ३।२०; अ. रं. ३।२१) ॥ ५ ॥

आलापो यस्याः सा, सुसान्द्रशिरोरुहा अतिघनकेशा, समधिककफा अधिकश्लेष्मा, स्वल्पाहारा अल्पभोजना, सुगूढा सुगुप्ता शिरोऽस्थिका, सुरभिसुरताढ्या सुगन्धक्रीडायुक्ता, स्निग्धानना चिक्कनमुखा ॥ ५ ॥

पीनकठिनकुचभागं वक्रास्थिग्रन्थिगुल्फमुद्वहति ।
विपुलजघनमुष्णाङ्गं मृदुसुललितमांसलौ बाहू ॥
स्वेदाम्बुकणोपचिता गौराङ्गी पललगन्धिरतसलिला ।
तुच्छोदरी समाङ्गी तरुणी पित्ताधिका वडवा ॥ ६ ॥

इयं तरुणी वडवा भवेत्, इयं का ? या, पीनकठिनकुचभागं य (?) दृढं कुचं उद्वहति, वक्रास्थिग्रन्थि(गुल्फ)मुद्वहति, विपुलजघनं, उष्णांगं, मृदुसुललितमांसलौ बाहू उद्वहति, किंभूता ? स्वेदाम्बुकणोपचिता, गौराङ्गी गौरदेहा, पललगन्धिरतसलिला मांसगन्धयुक्त(रतसलिला), तुच्छोदरी कृशोदरी, समाङ्गी समानाङ्गी, पित्ताधिका पित्तप्रधाना ॥ ६ ॥

खर्वा स्थूला प्रकटदशना कुन्तलैः स्थूलनीलै
रक्ता वातप्रकृतिरकृशैर्हस्तपादैर्वराङ्गी ।
शीतोष्णाङ्गी बहुतरवचाश्चञ्चलाऽनल्पमेदा
रोमाकीर्णं वहति करिणी दानगन्धं वराङ्गम् ॥ ७ ॥

---

पा०—°स्थिगुंठि (बी.) ॥ ६ ॥ °नीलैरक्ता (बी)। बहुतरवचना (स. पु.)। दानगन्धा (स. पु.) ॥ ७ ॥

---

टि०—पललगन्धीति–पललं मांसम्। "पीतपललगन्धिसुरताम्बुः" इति रतिरहस्ये (३।२६), तत्र पीतं पीतवर्णं; "कामाम्भः प्रबलप्रगन्धि" इति अनङ्गरङ्गे (३।२३)। मीननाथस्तु मीनगन्धत्वमाह। एतत्सर्वं समानार्थकम्। अत्र विशेषस्तु वडवा "किंचित्पृथ्वधरा" (अ. रं. ३।२२), "दीर्घरता" (अ. रं. ३।२३), "चण्डवेगा" (र. र. ३।२६) चेति॥ इयं शङ्खिनीसमाना, यस्याः "क्षारगन्धि स्मराम्बु" (र. र. १।१६)॥६॥ दानगन्धं–"करिमदमदनाम्वुः" इति करिण्या विशेषणं रतिरहस्ये (३।२८); उग्रगन्धि कन्दर्पनीरं (अ. रं.)। अपरे विशेषास्तु–'स्फारलम्बाधरोष्ठी' (र. र. ३।२८) 'प्रस्थूललम्बौष्ठिका' (अ. रं. ३।२४)वा, विपुलमदनतोया' (र. र. ३।२८), 'दण्डसाध्या' (र. र. ३।२९) रते 'कष्टैकसाध्या' (अ. रं. ३।२५) वा, नाम चण्डरतैकतोष्या च ॥ प्रकारान्तरविभाग इयं हस्तिनीप्रख्या, यथोक्तं रतिरहस्ये हस्तिनीवर्णने (१।१८)–"द्विरदमदविगन्धिः स्वाङ्केऽनङ्के च।" इति। (स्वस्या अङ्कमेव स्वाङ्कं तत्र, अनङ्गस्य कं जलं मदनाम्बु तत्र च।) अतः पद्मिन्यादिषूक्तः स्मराम्बुनो गन्धविशेषः तत्तच्छरीर-

करिणी हस्तिनी, रोमाकीर्णं वराङ्गं भगं वहति, कैः ? स्थूलनीलैः कुन्तलैः केशैः, हस्तपादैः अकृशैः स्थूलैः, किंभूता ? खर्वा, स्थूला, प्रकटदशना, रक्ता रक्तवर्णा,

---

ष्वपि लक्षयितव्यः, तत्र शरीरगः सूक्ष्मः, स्मराम्बुगस्तीव्रः सुलक्ष्य इत्यपर एव तत्रतत्रोक्तं इति वेदितव्यम् ॥ रोमाकीर्णं वराङ्गं वहति इत्यपरं हस्तिन्याश्चिह्नमत्रोक्तं, तस्य जघन-वराङ्गोष्ठभागः प्रभूतवालालङ्कृत इत्यर्थः, तेन पूर्वपूर्वस्यास्तदल्पतरत्वमवसेयम् । वराङ्ग-रोम्णामदर्शनेऽपि तद्गुणः कादाचित्ककक्षारोमदर्शनेनानुमेयः, तेषां च बाहुल्याबाहुल्यानु-सारेण तासां कामवेगबाहुल्याद्यवगन्तव्यमित्यपि केषाञ्चिदनुभवः ॥–अत्रेदमपि बोद्धव्यं यत् पद्मिन्यादिजातिविभागस्तत्तच्छरीरवराङ्गगन्धगुणमूलकः, हरिण्यादिविभागस्तु तत्तद्वराङ्गपरि-माणगुणमूलकः तत्सूक्ष्मसम्बन्धनिपुणदृष्टिभिरुपदिष्टः, तेन प्रायः शरीरगन्धादेव वराङ्ग-परिणाहमूलिकहरिण्यादिजातिज्ञानं कामशास्त्रज्ञानामेव भवतीति ॥ अत्रोक्तानि तत्तत्सा-मान्यलक्षणानि व्यभिचारीणि, विशिष्टलक्षणानि चाव्यभिचारीणीति, तत्तज्जातिभेदो विशिष्टलक्षणैश्चिह्नारोहपरिणाहैः मदनजलसौरभविशेषसूचकशरीरगन्धैश्च निर्णेय इति रह-स्यम् ॥ अत्र जातिभेदज्ञाने विशेषो मीननाथविरचितस्मरदीपिकायां यथा–“ पद्मिनी पिक-वाणी च, स्निग्धवाणी च चित्रिणी । शङ्खिनी क्रूरवाणी च, मेघवाणी च हस्तिनी ॥(३७)॥ पद्मिनी पादशोभा च, केशभोभा च चित्रिणी । शङ्खिनी मुखशोभा च, कटिशोभा च हस्तिनी ॥ (३८) ॥ पद्मिनी पद्मगन्धा च, क्षी(क्षा?)रगन्धा च चित्रिणी । शङ्खिनी मीनगन्धा च, मदगन्धा च हस्तिनी ॥ (३९) ॥ पद्मिनी पद्म(स्वल्प ?)निद्रा च, दीर्घनिद्रा च चित्रिणी । शङ्खिनी घोरनिद्रा च, गजनिद्रा च हस्तिनी ॥ (४०) ॥ पद्मिनी पद्मबन्धेन, नागबन्धेन चित्रिणी । शङ्खिनी मीनबन्धेन, गजबन्धेन हस्तिनी ॥(४१)॥ पद्मिनी स्वल्पभोगा च, लघुभोगा च चित्रिणी । शङ्खिनी बहुभोगा च, गजभोगा च हस्तिनी ॥ (४२) ॥ शशकः पद्मिनीं चैव, चित्रिणीं च मृगस्तथा । शङ्खिनीं वृषभश्चैव, हस्तिनीं तु हयस्तथा । रमते तुल्यभावेन तदा समरतं भवेत् ॥ (४३) ॥” इति । ( अनेन पद्मिनी हरिणी, चित्रिणी मृगी, शङ्खिनी वडवा, हस्तिनी च सैव प्रकारान्तरे इति स्फुटम् ) ॥ सामुद्रिके तु–“ पद्मिनी बहुकेशा च, स्वल्पकेशा च हस्तिनी । शंखिनी दीर्घकेशा च वक्रकेशा च चित्रिणी ॥ ( ११२ ) ॥ वर्तुलौ पद्मिन्याः स्तनौ, वक्रस्तनी च हस्तिनी ( 'हस्तिनी विकटस्तनी' ) । दीर्घस्तनौ च शंखिन्याश्चित्रिणी च समस्तनी ॥ ( ११३ ) ॥ पद्मिनी दंतशोभाढया, दंतो-न्नता च हस्तिनी । शंखिनी दीर्घदंता च, समदंता च चित्रिणी ॥ ( ११४ ) ॥ पद्मिनी पद्मगंधा च, मधुगंधा च हस्तिनी । शंखिनी क्षारगंधा च, मत्स्य('शून्य')गंधा च चित्रिणी ॥ ( ११५ ) ॥ हंसस्वरा पद्मिनी ( च ), गूढ(गज)स्वरा च हस्तिनी । रूक्षस्वरश्च शंखि-न्याः, केकिस्वरा च चित्रिणी ॥ ” ( ११६ ) ॥ इति ॥ अन्यत्र तु–“ पद्मिनी लंबकेशा च, कुटिलकेशा हस्तिनी । चित्रिणी स्वल्पकेशा च, ऊर्ध्वकेशा च शंखिनी ॥ ( ७ ) ॥ पद्मिनी स्तनविस्तीर्णा, स्तनहीना च हस्तिनी । चित्रिणी स्तन···च, स्तनदीर्घा च शंखिनी ॥(८)॥ पद्मिनी हीननिद्रा च, अतिनिद्रा च हस्तिनी । चित्रिणी स्वल्पनिद्रा च, दीर्घनिद्रा च

वातप्रकृतिः वातप्रधाना, वरांगी उत्तमशरीरा, शीतोष्णांगी शीतोष्णमिश्रितशरीरा, बहुतरवचना, चंचला, अनल्पमेदा महास्थूला, दानगन्धा मदगन्धा ॥ ७ ॥

**नरः संलक्षितो व्यक्तमनेकैरश्वलक्षणैः ।**
**एकतो लिङ्गकौमल्याच्छशको जायते ध्रुवम् ॥ ८ ॥**

नरः अनेकैः अश्वलक्षणैः संलक्षितो दृष्टः, एकतो लिङ्गकौमल्यात् शशको ध्रुवम् निश्चितं जायते ॥ ८ ॥

**कक्षपादतलं तुच्छं गुरुत्वं च कुचास्ययोः ।**
**यस्याः सा हरिणी ज्ञेया याऽपीभीलक्षणैर्युता ॥ ९ ॥**

या स्त्री इभी हस्तिनीत्र(व?)ल्लक्षणैर्युक्ताऽपि विशेषैः सा हरिणी ज्ञेया, किंलक्षणं ? कक्षतलं पाद(तलं) तुच्छं स्वल्पं, स्तनमुखयोर्गुरुत्वं च यस्याः ॥ ९ ॥

**हरिणीशशयोर्योगे वडवावृषयोस्तथाऽश्वहस्तिन्योः ।**
**उभयोः समरतमुदितं त्रितयं रतिशास्त्रतत्त्वज्ञैः ॥ १० ॥**

रतिशास्त्रतत्त्वज्ञैः कामशास्त्रज्ञैः, त्रितयं उभयोः समरतं समानसुरतं, उदितं कथितं, कयोःकयोः ? हरिणीशशयोर्योगे, वडवावृषयोः, अश्वहस्तिन्योः, एतत्त्रितयं समानम् ॥ १० ॥

**हरिणीवृषयोर्वडवाहययोर्द्वितयं तथोच्चरतमुदितम् ।**
**नीचद्वयं च वडवाशशयोर्वृषहस्तिन्योः ॥ ११ ॥**

---

पा०—तुच्छे (बी) । ज्ञेया धीराभी (बी) ( अशुद्धः पाठः ) ॥ ९ ॥ वृषयोर्वडियो० (बी) ( त्रुटिताक्षरः पाठः ) । °रतमुद्दिष्टं (बी) ॥ ११ ॥ [ द्वादशतमश्लोकादारभ्य पंचदशपरिच्छेदस्य सप्तमश्लोकं यावत् पाठः बी. पुस्तके प्रभ्रष्टः । ]

---

शंखिनी ॥ ( ९ ) ॥ पद्मिनी स्वल्पकामा च, अतिकामा च हस्तिनी । चित्रिणी स्वल्पकामा च, दीर्घकामा च शंखिनी ॥ ( १० ) ॥ " इति ॥ तथा—" पद्मिनीमुखसौरभ्यमूरुसौभाग्या हस्तिनी । चित्रिणी कटिसौभाग्या, पदसौभाग्या शंखिनी ॥ पद्मिन्यः प्रेम वांछंति, द्रव्यं वांछति हस्तिनी । चित्रिण्यो मानमिच्छंति, कलहं वांछति शंखिनी ॥ " इति ॥ ( एषु श्लोकेषु बहवः पाठभेदाः ) ॥ ७ ॥

टि०—अनेकैः सामान्यैरिति भावः । कौमल्यं ह्रस्वत्वमिति भावः । अनेन श्लोकेन शशादिपुरुषजातिनिर्णये कामाङ्कुशप्रमाणमेव प्रधानं लिङ्गमित्युक्तम् ॥ ८ ॥ एवं रमणीनां जातिविशेषनिर्णये गमकं कक्षाद्यवयवविशेषाणां तुच्छत्वादिगुणमाह कक्षेति । इदं चिन्त्यम् । वस्तुतस्तत्रापि कामालयस्य निम्नत्वायैव तत् ॥ ९ ॥

प्रकाशो बाहुमूलस्य कक्षोदरकुचस्य च ।
बालानां चुम्बनालिङ्गौ, कबरीमोक्षसंयमौ ॥ २ ॥
स्वाङ्गावयववस्त्राणां निरन्तरविलोकनम् ।
अश्रुपाताङ्गुलीमर्दौ, श्लेष्मोत्सर्गौ मुहुर्मुहुः ॥ ३ ॥
कान्तस्य गुणसौभाग्यसंक्रीडागुणसम्पदाम् ।
सङ्कीर्तने महोल्लासाः, साङ्गभङ्गं विजृम्भणम् ॥ ४ ॥
श्रुतिसद्माङ्गुलिक्षेपः, सस्मिते वचनेक्षणे ।
एतान्ययत्नसाध्यानामिङ्गितानि समुन्नयेत् ॥ ५ ॥

एतानि अयत्नसाध्यानां इङ्गितानि समुन्नयेत् जानीयात्, तदेवाह—बाहुमूलस्य प्रकाशः, कक्षाया उदरस्य कुचस्य च प्रकाशः, बालानां चुंबनालिंगौ चुंबनं च आलिंगनं च, कबरीमोक्षसंयमौ कबरी(र्याः?) केशपाशस्य मोक्षः संयमं च, स्वशरीरावयववस्त्राणां निरन्तरविलोकनं, अश्रुपातः, अंगुलीमर्दः, मुहुर्मुहुः श्लेष्मोत्सर्गः, कान्तस्य पुरुषस्य रूपसौभाग्यसंक्रीडागुणसम्पदां संकीर्तने महोल्लासाः, साङ्गभङ्गं यथा स्यात् (तथा) विजृम्भणं, श्रुतिसद्मनि अंगुलिक्षेपः, वचनेक्षणे सस्मिते सहास्ये ॥ २।३।४।५ ॥

सव्याधीर्ष्यालुकुव्यक्तिधनहीनप्रवासिनाम् ।
स्त्रियो यात्रादिसंरक्तास्ताश्च साध्याः प्रकीर्तिताः ॥ ६ ॥

सव्याधी रोगी, ईर्ष्यालुः परपिशुनः, कुव्यक्तिः कुभव्यः, धनहीनो दरिद्रः, प्रवासिनां परदेशिनां स्त्रियः, याश्च यात्रादिसंरक्तास्ताः साध्याः कथिताः ॥ ६ ॥

ह्रीभयालङ्कृताः कान्ता दुःखार्ता लोभवर्जिताः ।
साध्यालिङ्गविपर्यस्ता असाध्यास्ताः प्रकीर्तिताः ॥ ७ ॥

---

पा०—बाल(ला)लिंगनमोक्षे च कबरीमोक्षणं ('मोचनं') तथा । (स्मरदी० पा.) ॥ २ ॥ स्वीयांगावयवस्यैव (स्म. दी.) । अश्रुपातोंगुलीमर्दः (स्म. दी.) ॥ ३ ॥ कान्तस्य रूपसौंदर्य० महोल्लासः स्वांगभंगावमर्दनम् (मी. स्म. दी.) °स्वीयभुजविमर्दनम् (रु. स्म. दी.) ॥ ४ ॥ श्रुतिवर्त्मागुलि० वदनेक्षणे । °साध्यानां लिंगानि च समु० (मी. स्म. दी.) °साध्यानि° (रु. स्म. दी.) ॥ ५ ॥ व्रीडयाऽलंकृता कांता उष्मार्ता लोभवर्जिता० असाध्या सा० ता । (स्म. दी.) ॥ ७ ॥

---

टि०—कुव्यक्तिः कृपणतामद्यद्यूतादिव्यसनासक्त्यादिना कुत्सिता निंद्या व्यक्तिः पुरुषविशेषः ॥ ६ ॥ विपर्यस्ता विपरीता ॥ ७ ॥

ताः स्त्रियः असाध्याः—याः ह्रीभयालङ्कृताः लज्जाभयभूषणाः, दुःखार्त्ताः शोकार्त्ताः, लोभहीनाः, पूर्वोक्तसाध्याचिह्नरहिताः ॥ ७ ॥

**रजकी मालिनी धात्री योगिनी प्रतिवेशिनी ।**
**सखी गोपालिका चेटी नापिती दूतिका मताः ॥ ८ ॥**

अस्यार्थः सुगमः ॥ ८ ॥

**प्रगल्भा युवती दक्षा परिज्ञातपरेङ्गिता ।**
**दूती नियोज्यते कार्ये वक्रभाषितभूषिता ॥ ९ ॥**

एतादृशी दूती कार्ये नियोज्यते, प्रगल्भा, युवती, दक्षा कार्यसमर्था, परिज्ञातः परस्य इङ्गितो यया सा, वक्रभाषितभूषिता वक्रोक्तिवादिनी ॥ ९ ॥

**प्रतिपदमदनप्रदीपकैस्तैर्मृदुवचनैर्युवती तयाऽभिधेया ।**
**कुसुमशररुजा विकीर्णधैर्या द्रुतमनुयास्यति यैः सुतेव दूतीम् ॥ १० ॥**

तया दूत्या युवती तैः मृदुवचनैः अभिधेया कथनीया, किंभूतैः ? प्रतिपदमदनप्रदीपकैः पदंपदं प्रति कामप्रबोधकैः, कथंभूता युवती ? कुसुमशररुजा कामव्याधिना गतधैर्या, यैः वचनैः दूतीं सुता कन्या इव, द्रुतं शीघ्रं, अनुयास्यति ॥ १० ॥

**सप्रेमदानैर्मधुरैर्वचोभिः**
**संरक्षितव्याः सततं युवत्यः ।**
**अरक्षिता ह्यात्मपतित्रिवर्ग-**
**नाशं करोत्यन्यजनानुरागात् ॥ ११ ॥**

पा०—प्रागल्भ्यसंहता दक्षा० नियोज्यते कार्ये बहुभाषावि० ( स्म. दी. ) ॥ ९ ॥ विकीर्णदेहा ( बी )। सुतेव दोग्ध्री (बी) ॥ १० ॥ सततं युवभ्यः ( स. पु. ) । ॰त्मरति (बी) । जनानुरागाः ( स. पु. ) ॥ ११ ॥

टि०—मालिनी मालाकारस्त्री ' मालण ' इति भाषायाम् । धात्री उपमाता बाल्ये मातुरपरा स्तन्यपायिनी । योगिनी भिक्षुकी परिव्राजिका यंत्रमंत्रादिप्रवीणा वा । प्रतिवेशिनी प्रत्यासन्नगृहवासिनी ' पडोसण ' इति भाषायाम् । गोपालिका दुग्धविक्रेत्री । चेटी दासी । इमाः स्वकार्यगुणविशेषेणावरोधेऽप्रतिषिद्धगमनागमना इति तासां दूतीकर्मण्युपयुक्तता ॥ इमाश्च द्वयोरपि नायकनायिकयोर्भवन्ति ॥ ८ ॥ प्रगल्भा वाङ्मनःकर्मसु निर्भया । दक्षा इत्यनेन क्रियावैदग्ध्यं, वक्रभाषितभूषिता इत्यनेन वाग्वैदग्ध्यं चोपलक्षितम् । वक्रेति काकुभाषणपटुः वक्रोक्तिप्रवीणा वा ॥ ९ ॥ सुतेव पुत्रीव, अनुयास्यति तदुक्तैककारिणी तदाज्ञावशंवदा वा भूयात् इत्यर्थः ॥ १० ॥ स्वीयारक्षणप्रकारं सहेतुकमाह सप्रेमेति । प्रेमदानं स्नेहसूचकः वस्त्राभरणादिवस्तूनां दायः ॥ ११ ॥

सप्रेमदानैः मधुरैः वचोभिः, सततं निरन्तरम्, रक्षितव्याः युवभ्यः रक्षाकर्तव्याः। अरक्षिताश्चेत्, आत्मपतिः स्वस्वामी, त्रिवर्गः धर्मार्थकामाः, तेषां नाशं करोति, अन्यजनानुरागाः अन्यजने परपुरुषे अनुरागाः ॥ ११ ॥

उद्यानतीर्थनटयुद्धसमुत्सवेषु
यात्रादिदेवकुलबन्धुनिकेतनेषु।
क्षेत्रेष्वशिष्टयुवतीरतिसङ्गमेषु
नित्यं सता स्ववनिता परिरक्षणीया ॥ १२ ॥

एषु स्थानेषु स्ववनिता नित्यं रक्षणीयाः भर्तॄः, उद्यानतीर्थनटयुद्धसमुत्सवेषु यात्रादिदेवकुलबन्धुनिकेतनेषु, गृहेषु अशिष्टयुवतीरतिसंगमेषु खेलनेषु ॥ १२ ॥

तारुण्यमोहमदनस्वजनोपरोधै-
र्धर्मार्थकामकुतुकोत्सुकसुप्रभावैः।
दूत्याऽभिनन्दितविचित्ररताश्रयेण
नार्यो भवन्त्यगणितार्यकुलोपचाराः ॥ १३ ॥

नार्यः एभिरगणितार्यकुलोपचारा भवन्ति—आर्यं कुलं आर्यकुलं, आर्यकुलस्य उपचारो व्यवहारः अगणितः आर्यकुलोपचारो यया तास्तथा। एभिः कैःकैः? तारुण्यं यौवनं, ततः मोहं( हः ) अज्ञानं, मदनः कामः, स्वजनोपरोधः स्वजनाग्रहः, तैः; धर्मार्थकामकौतुके उत्सुका एतेषां प्रभावैः, दूत्या अभिनन्दितविचित्ररताश्र॥ १३॥

चेष्टां विचार्य निभृतं निजसुन्दरीणां
रूपोत्तमान्यनरलोचनगोचरेषु।
यस्या न सन्ति सुतरां कथितेङ्गितानि
कान्तासु सैव गृहिणी बहुमाननीया ॥ १४ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे परस्त्रीसाधनं स्वदाररक्षा नाम पञ्चदशः परिच्छेदः ॥ ]

---

**पा०**—तीर्थरतयुद्ध० (बी)। युद्धसमुद्भवेषु (वी)। खण्डेष्वशिष्ट० (स. पु.)। नित्यं **मताः स्ववनिताः**···**याः**। (स. पु.) ॥१२॥ भवन्ति ग० (बी.) (अशुद्धः पाठः) ॥१३॥

---

**टि०**—रक्षाप्रसंगांस्तत्स्थलांश्चाविष्करोति उद्यानेति। तीर्थं पुण्यक्षेत्रं काश्यादि, तत्र गमनं परैः सह इति भावः। यात्रा देवतोत्सवः। देवकुलं 'देवल' इति भाषायां प्रसिद्धं देवविशेषमंदिरम्। क्षेत्रं केदारः। अशिष्टयुवती स्वैरिणी दूती कुट्टनी वा। रतिः प्रेम। संगमः

पुरुषनिजसुन्दरीणां चेष्टां विचार्य, रूपोत्तमान्यनरलोचनगोचरेषु सुन्दरमेव पुरुषनयनविषयेषु, यस्याः कथितेङ्गितानि न सन्ति, कान्तासु स्त्रीषु, सैव गृहिणी बहु यथा स्यात्तथैव माननीया ॥ १४ ॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां स्वदाररक्षणो नाम नवमः परिच्छेदः ॥

---

**सेवनं योषितां कुर्याद्बुद्ध्वा पथ्यक्रमं बुधः ।**
**बालायोग्याभिरूढानामृतुयोगविभागतः ॥ १ ॥**

बुधः पण्डितः, ऋतुभोगविभागतः। बालायोग्याभिरूढानां पथ्यकमं बुद्ध्वा योषितां सेवनं कुर्यात् । योग्या तरुणी । अभिरूढा प्रौढा ॥ १ ॥

**बालेति गीयते नारी यावच्छोडशवत्सरम् ।**
**ततः परं च तरुणी सा यावत् त्रिंशतं भवेत् ॥ २ ॥**
**तदूर्ध्वमभिरूढा स्याद्यावत् पञ्चाशतं पुनः ।**
**वृद्धा ततः परं ज्ञेया सुरतोत्सववर्जिता ॥ ३ ॥**

---

पा०—कुर्यान्मत्वा दोषबलाबलम् (स्म. दी.) कुर्याद्बुधो बुद्ध्वा यथाक्रमम् ( शा. प. ) । °ग्याधिरूढा° ( शा.प. ) । योग्यातिरूढाना० ( स्म. दी.) । दोषविभागतः (बी.) ऋतुभोग ( स. पु. ) योगविभावनात् ( शा. प. ) ॥१॥ यावद्वर्षाणि षोडश ( शा. प.) तस्मात्परं······यावता त्रिंशता (शा. प.) तस्मात्परं च योग्या स्याद्यावद्विंशतिवत्सरम् । ( स्म. दी. ) ॥ २॥ मधिरूढा ( शा. प. ) । यावत्पंचाशता भवेत् ( शा. प. ) । वृद्धा तत्परतो ज्ञे०······वञ्चिता ( शा. प. ) ॥ ३ ॥

---

समागमः मैत्रीति यावत् ॥ १२ ॥ स्त्रीभ्रंशकारणान्याह तारुण्येति । उपरोधः नियंत्रणा । अगणितेत्यादि पातिव्रत्याद्भ्रष्टा भवन्तीति भावः ॥ १३ ॥ चेष्टां पूर्वोक्तेंगितानि । विचार्य दृष्ट्वा तद्विषयकमूहापोहं कृत्वा । निभृतं गूढं रहसि ॥ १४ ॥ अस्मिन् परिच्छेदे उक्तानुक्तानि सर्वाण्यनुरागेंगितानि मत्कृतकुट्टनीमतदीपिकायां ६३० आर्याव्याख्याने संगृहीतानि । तेषु यानिकानिचित् स्वीयाया अन्यमुद्दिश्य दृश्यंते चेत्तदा " स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु । " ( मेघदूते २९ ) इति न्यायेन तानि परानुरागेंगितानीत्यवधार्य अप्रमत्तो भूत्वा पत्न्याः स्वस्मिन् रागरक्षणाय कौलीन्यरक्षणाय च तां निगृह्णीयात्, परकीयायां दृष्टानि चेत् सा सुसाध्येति मत्वा कामपरवशश्चेत् प्रवर्तेतेति स्वदाररक्षापरस्त्रीसाधनफलकं कामेंगितज्ञानं स्त्रीभ्रंशकारणप्रसंगादिकं च तत्रतत्रोपदिष्टमिति बोद्धव्यम् ॥ इति पंचदशः ॥ (॥ १५ ॥)

टि०—यथा फलादीनां सेवने तत्तत्पाकभेदेन फलभेदः, तथा रमणीसेवनेऽपि तद्वयः-परिणामभेदेन फलभेद इति, वयोरूपविभाजकधर्मेण तासां बालादिभेदान् तत्सेवनकालादींश्चा-

यावत् षोडशवत्सरं तावत् बाला इति गीयते; ततः परं यावत्त्रिंशतं व्याप्य तरुणी, (२।) तदूर्ध्वं तत्पश्चात्, यावत् पंचाशतं व्याप्य, अभिरूढा प्रौढा स्यात्; ततः परं वृद्धा ज्ञेया, किंभूता वृद्धा ? सुरतोत्सववर्जिता ॥ २–३ ॥

**निदाघशरदोर्बाला पथ्या विषयिणां भवेत् ।**
**हेमन्ते शिशिरे योग्या, प्रौढा वर्षावसन्तयोः ॥ ४ ॥**

विषयिनां( णां ) भोगिनाम्। योग्या तरुणी । अन्यत्सुगमम् ॥ ४ ॥

**सततं सेव्यमानाऽपि बाला वर्धयते बलम् ।**
**क्षयं (क्षेमं?) नयति योग्या स्त्री, प्रौढा तु कुरुते जराम् ॥ ५ ॥**

सततं निरन्तरं, सेव्यमानाऽपि बाला बलं वर्धयते । योग्या तरुणी स्त्री क्षयं नयति क्षीणं कुरुते, प्रौढा स्त्री जरां वार्धक्यं कुरुते ॥ ५ ॥

**विशेषमाह महेश्वरः—**

**अलोमकाः सतिलका नित्यं सेव्यास्तु योनयः ।**
**अलोमकत्वं कक्षेण, मुखेन ज्ञायते तिलः ॥ ६ ॥**

---

पा०—°र्बाला सेव्या (स्म. दी.) । विषयिनां (स. पु.) विषयिणो (शा.प.) ॥४॥ क्षेमं नयति···वृद्धा प्रकुरुते (स्म. दी.) । नित्यं वा से०······प्रौढा जनयते··· । (शा. प.) ॥ ५ ॥ महेश्वरस्तु विशेषमाह ( शा. प. ) । ‘ विशेषमाह महेश्वरः ’ इति स. पु. नास्ति ॥ अलोमशाः ( शा. प. ) । सेव्या हि ( शा. प. ) । अलोमत्वं तु ( स. पु. ) । तिलम् ( बी; स. पु. ); अलोमशत्वं कक्षायां मुखे संजायते तिलः ( शा. प. ) ॥ ६ ॥

---

स्मिन् परिच्छेदे निरूपयति ॥ सेवनं संभोगम् । पथ्यं हितं तस्य क्रमं परिपाटीम् । योग्या तरुणी । अभिरूढा प्रौढा ॥१॥ षोडशवत्सरं तच्च कैशोरादूर्ध्वं, कैशोरं च आपंचदशाब्दम् ॥ २ ॥

टि०—विषयिणां कामिनाम् । निदाघः ग्रीष्मः ज्येष्ठाषाढमासात्मकः, शरद् आश्विनकार्तिकमासात्मिका, मार्गशीर्षपौषमासात्मको हेमंतः, माघफाल्गुनमासात्मकः शिशिरः, श्रावणभाद्रपदमासात्मकः वर्षर्तुः, चैत्रवैशाखात्मकश्च वसन्तः ॥ ४ ॥ क्षयं नयति बलक्षयं कुरुते अत्यंतसेवनेन इति भावः, तस्या गाढमदनमदवत्त्वात् । वस्तुतस्तु ‘क्षेमं नयति’ इति स्मरदीपिकापाठः समीचीनः, परिपूर्णरसात्मकभोगरूपं कल्याणं प्रापयति इति च तदर्थः ॥ ५ ॥ महेश्वरस्तु स्मरदीपिकायाः कर्ता रुद्रः स्यात् । तत्र ‘अलोमकाः’ इति श्लोकस्तु नोपलभ्यते ॥ अलोमकाः जघनभागे अल्पकेशा इत्यर्थः, तथा च सामुद्रिके–“ रोमशो विवृतास्यश्च ह्रस्वनासोऽतिदुर्भगः ( भगः )।” इति । ( रोमशः प्रभूतकेशवान्, विवृतास्यः प्रकाशछिद्रः, ह्रस्वनासः अगूढमदनछत्रः । ) सतिलका इति, तिलकं तिलसदृशं चिह्नं तेन सहिताः; तथा च काशीखंडे–“ गुह्यस्य दक्षिणे भागे तिलकं यदि योषितः । तदा क्षिति-

अलोमकाः लोमवर्जिताः, योनयः नित्यं सेव्याः सेवनयोग्याः । कक्षेण अलोमत्वं ज्ञायते, मुखेन तिलं( लः ) ज्ञायते ॥ ६ ॥

**आसीने लालयेद्बालां, तरुणीं शयने तथा ।**
**उत्थिते चाभिरूढां तु, लालनं त्रिविधं मतम् ॥ ७ ॥**

त्रिविधं लालनं मतं, आसीने बालां लालयेत्, शयने तरुणीं, उत्थितेऽभिरूढां प्रौढां लालयेत् ॥ ७ ॥

**मोहनं नारभेत्तावद्यावन्नोत्कण्ठिता प्रिया ।**
**अन्यथा तत्सुखोच्छित्तिरशीतेऽर्ककरादिव ॥ ८ ॥**

मोहनं तावत् न आरभेत् यावत् प्रिया उत्कण्ठिता न, अन्यथा तत्सुखोच्छित्तिः प्रियासुखभंगः । तत्र दृष्टान्तमाह, अशीते उष्णकाले, अर्ककरादिव रविकिरणादिव ॥८॥

**नाभिहृत्कण्ठदेशेषु दधत् श्वासं च यः क्रमात् ।**
**कामोऽहं भावयेत् कामी गायत्रीं सप्तधा जपेत् ॥ ९ ॥**

यः पुरुषः नाभिहृत्कण्ठदेशेषु श्वासं दधत् अहं कामः इति भावयेत्, गायत्रीं सप्तधा जपेत् ॥ ९ ॥

---

**पा०**—उत्थाने त्वभिरूढां च चालनं ( स्म. दी. ) °तेष्वभिरूढां च···विदुः ( शा. प. ) ॥ ७ ॥ नो रमेत रतं तां ( शा. प. ) । नोत्कण्ठति(ते ?) (बी.) । अन्यथा न सुखोत्पत्तिरिति कामानुशासनम् ( शा. प. ) ॥ ८ ॥ यत् क्रमात् ( बी. )। दधच्छ्वासं शनैः शनैः । कामं संसाधयेत् कामी···पठेत् ॥ ( शा. प. ) ॥ ९ ॥

---

पतेः पत्नी ” इत्यादि, तथा सामुद्रिकेऽपि–“गुह्यान्ते तिलको यस्या रक्तकुंकुमसंनिभः । अथवा दक्षिणे भागे प्रशस्ता सा निगद्यते ॥” इति ॥ गुह्यस्थानीययोस्तयोः परिज्ञानयुक्तिमाह अलोमेति । कक्षेण बाहुमूलेन तात्स्थ्यात् लक्षणया तत्र संभूतकेशैः इति यावत् । मुखेन तत्सौंदर्यविशेषेण तद्वर्तितिलेन वा ॥ ६ ॥

**टि०**—आसने स्वांकाधिरूढां कृत्वा आलिंगनचुंबनादिबाह्यरतेन इति भावः । शयने शयनपतितां कृत्वा आभ्यन्तररतेन इति भावः । उत्थिते शयनासनाभ्यां भिन्ने अर्थात् हास्यालापादिभिः ॥ स्मरदीपिकायां तु–“ फलतांबूलवासोभिर्बाला वश्या भवेन्नृणाम् । विविधाभरणैः स्नेहैस्तरुणी वशवर्तिनी ॥ गाढालिंगनचुंबनैश्चातिरूढास्तु योषितः । गौरवैर्मधुरालापैर्हरेद्वृद्धां प्रियंवदः ॥” इत्युपदिष्टम् ॥ ७ ॥ मोहनं सुरतम् । उत्कंठिता बाह्यरतेन जातसुरताभिलाषा । अन्यथा सुरतोत्कंठाभावे । सुखं आनंदः तृप्तिर्वा, तस्य उच्छित्तिः विनाशः । अशीते उष्णकाले । अर्ककरात् सूर्यकिरणात् ॥ ८ ॥ तस्या वशीकरणोपायमाह नाभीत्यादिभिस्त्रिभिः ॥ ९ ॥

गायत्री यथा—ॐ नमो मनोभवाय विद्महे कन्दर्पाय धीमहि तन्नः कामः प्रचोदयात् ॥ १० ॥

व्याजेन चुम्बनादीनामुच्छ्वासं पाययेत् प्रियाम् ।
तेन सा वशमायाति न तस्यास्तु स्वयं पिबेत् ॥ ११ ॥

यः पुरुषः व्याजेन प्रियां चुम्बनात् ईषत् श्वासं पाययेत्, तेन सा स्त्री वशं आयाति, तस्याः स्त्रियाः श्वासं स्वयं न पिबेत् ॥ ११ ॥

सीत्कारश्च हकारश्च श्वसितञ्च त्रपाक्षयम् ।
प्रस्विन्नवदनं चैव विकारोऽथ भगस्य च ॥ १२ ॥
बुद्ध्वा चैतानि लिङ्गानि प्रियायाः सुतरां बुधः ।
तया तुल्यसुखं चैतदात्मरागं समारभेत् ॥ १३ ॥

बुधः पण्डितः, सुतरां अत्यर्थेन, प्रियायाः एतानि लिङ्गानि बुद्ध्वा, तया समं, तुल्यसुखं च एतदात्मरागं समारभेत् ॥ १२–१३ ॥

सुन्दर्यामनिशं यस्यां रमते चित्तमात्मनः ।
सैवेयं भावनीया स्यादात्मरागसमुद्भवः ॥ १४ ॥

---

पा०—'गायत्री यथा' इति बी. नास्ति । अथ कामगायत्री–ॐ नमो भगवासाय विद्महे पुष्पबाणाय धीमहि ( शा. प. ) ॥ १० ॥ चुम्बनाद्दीषच्छ्वासं यः ( स. पु. )। न तु तस्याः ( शा. प. ) ॥ ११ ॥ शीत्कारं चाथ हुङ्कारं हसितं च त्रपाक्षयः ( स्म. दी. )। त्रपाक्षरं ( स. पु. ) ॥ १२ ॥ सुखं वाञ्छां नात्म° ( वाञ्छना ? ) ( बी. ) । समाचरेत ( बी.) °लिंगानि योषितां सुरतं बुधः । तथा तुल्यसुखं वाञ्छन्ननुरागं ( ग ? )समं चरेत् । ( स्म. दी. ) ॥ १३ ॥ सौन्दर्यो ( स. पु. ) । भावनायां स्या°(बी.) ॥ १४ ॥

---

टि०—तस्याः सुरतोत्कंठेंगितान्याह सीत्कारेति द्वाभ्याम् । सीत्कारः ओष्ठप्राणसंयोगजो ध्वनिविशेषः । हकारः "सरोषवारणे हीरे हः स्यादीशात्मज तु हिः ।" इति विश्वलोचनः । यद्वा 'हुंकारः' इति स्मरदीपिकापाठोऽत्र युक्तः । श्वसितं मुखनासिकाभ्यां बहिर्गमनरूपो हृदयस्य प्राणव्यापारः । त्रपाक्षयः निर्लज्जता वाङ्मनःकायेभ्यो लज्जापगमः । प्रस्विन्नं स्वेदवत्, स्वेदश्च सात्त्विको भावः, उत्तमानां तु स्वेदो वदन एव इति तन्मात्रमुक्तम् । भगस्य विकारः गुह्ये स्फुरणं स्यंदनं कण्डूमत्त्वं वा ॥ १२ ॥ एतै रमण्या उत्कंठां निश्चित्य रमणोऽपि आत्मरागं स्वोत्कंठां समाचरेत् प्रकटीकुर्यात् इति भावः ॥ १३ ॥ तत्र युक्तिमाह सुंदर्यामिति । या काऽपि स्त्रस्यातिवल्लभा भवेत् तस्याः स्त्रीदीपनविभावभूतायाः रूपादीनां प्रस्तुतायामारोपं कृत्वा सैवेयमिति भावयेत् ॥ १४ ॥

यस्यां सौन्दर्यमनिशं वारंवारं, आत्मरागसमुद्भवः, आत्मनः चित्तं रमते, सा इयं भावनीया स्यात् ॥ १४ ॥

**अत्राह महेश्वरः—**

**एवं संचोदिता नारी नान्यमिच्छति मानवम् ।**
**क्लीबोऽपि हृदयं तस्याः प्राप्नोत्येव न संशयः ॥ १५ ॥**

एवं अनेन प्रकारेण, संचोदिता नारी स्त्री, अन्यं मानवं पुरुषं, न इच्छति । तस्याः स्त्रियाः हृदयं क्लीबोऽपि नपुंसकोऽपि पुरुषः प्राप्नोति, संशयो न ॥ १५ ॥

**इति नरैर्विधिना परिसेविता**
**परमशर्म समेत्य नितम्बिनी ।**
**तृणवदूर्जितजीवितनिस्पृहा**
**त्यजति याम्यपुरेऽपि न वल्लभम् ॥ १६ ॥**

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे बालादिपथ्यक्रमलालनं नाम षोडशः परिच्छेदः ॥ ]

इति अनेन प्रकारेण, विप्रवरैः उपसेविता नितम्बिनी, याम्यपुरे यमपुरेऽपि, वल्लभं पुरुषं न त्यजति, किं कृत्वा ? परमशर्म सुखं, समेत्य प्राप्य, किंभूता स्त्री ? तृणवत्, उर्जिते जीवितेऽपि, निस्पृहा ॥ १६ ॥

[ इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां बालादिपथ्यक्रमलालनो नाम दशमः परिच्छेदः ॥ ]

---

**पा०**—अत्राह महेश्वरः (स. पु. नास्ति) । क्लीवो हृदयसर्वस्वं (बी.) । प्राप्नोत्येवं (स. पु.) ॥ १५ ॥ इति विप्रवरैरुपसे० (स. पु.) । °वदुर्जित (स. पु.) ॥ १६ ॥

---

**टि०**—एवं नवमश्लोकादरभ्य पूर्वश्लोकं यावदुक्तप्रकारैः । संचोदिता संघटिता इत्यर्थः ॥ १५ ॥ शर्म सौख्यम् । ऊर्जिते बलवति, “ उर्जिते ’ इति पाठे त्यक्ते इत्यर्थः । याम्यपुरे यमसंबंधिनि नगरे परलोके इत्यर्थः, यद्वा याम्यः शिवो विष्णुर्वा, तस्य लोके कैलासे वैकुण्ठे वा इत्यर्थः ॥ १६ ॥ इति षोडशः ॥ ( ॥ १६ ॥ )

पादाग्रजङ्घोरुषु योनिनाभि-
कुक्षौ कुचे हस्ततले गले च ।
ओष्ठे कपोले नयने श्रुतौ च
शीर्षे तथा सर्वशरीरदेशे ॥ १ ॥
स्थानेषु चैतेषु तिथिक्रमेण
नितम्बिनीनां समुदेति कामः ।
वामाङ्गभागोपरि शुक्लपक्षे
कृष्णे च सव्यावयवे तथैव ॥ २ ॥

नितम्बिनीनां स्त्रीणां, एतेषु स्थानेषु, तिथिक्रमेण कामः समुदेति । शुक्लपक्षे वामाङ्गभागं व्याप्य समुदेति, कृष्णपक्षे सव्यावयवे दक्षिणअवयवे समुदेति । तत्कि ? तदेवाह—पादाग्रे, जंघायां, ऊरौ, योनौ, नाभौ, कुक्षौ, कुचे, हस्ततले, गले, ओष्ठे, कपाले, नयने, श्रुतौ, शीर्षे, सर्वाङ्गशरीरदेशे ॥ १–२ ॥

अङ्गुष्ठमूलात्प्रभृति क्रमेण
यावच्छिखामूलमुपैति कामः ।
कृष्णे तु पक्षे चरणाग्रदेशं
प्रयाति नित्यं शिरसस्तथैव ॥ ३ ॥

---

पा०—नाभौ (स. पु.)। कपाले···शीर्षे च सर्वाङ्गश० (स. पु.) ॥ १ ॥ कृष्णे तु पक्षे शिरसः प्रदेशात्प्रयाति नित्यं चरणाग्रमेव ॥ २ ॥ मूलप्रभृति (बी)। कृष्णे च पक्षे (बी) ॥ ३ ॥

---

टि०—आदौ त्रिभिस्तिथिविशेषेषु कामोदयस्थानान्याह यान्यन्यत्र चंद्रकलास्थानानीति संज्ञितानि । पादाग्रात् मूर्धान्तं शरीरे तिथिसंख्यया पंचदशस्थानान्युक्तानि । तेषु ग्रंथान्तरेषु क्वचिद्भेदो वर्तते स सर्वो विस्तरभिया नात्रोल्लिख्यते ॥ १ ॥ तिथिक्रमेणत्यादि—शुक्लप्रतिपदायां वामभागे पादाग्रे, शुक्लद्वितीयायां वामजंघायां इत्यादिक्रमेण । तथा कृष्णप्रतिपदायां शीर्षस्य दक्षिणे भागे, कृष्णद्वितीयायां दक्षिणकर्णे इत्यादिप्रकारेण व्युत्क्रमेणेति बोध्यम् ॥ हरिहरस्तु शृंगारदीपिकायां शुक्लपक्षादि वैलक्षण्येनाह—"रजोदर्शनमारभ्य आपंचदशवासरम् । शुक्लपक्ष इति ख्यातः कृष्णपक्षस्तथोपरि ॥" इति ॥ अयं निर्देशः सर्वस्त्रीसाधारणः, पद्मिन्यादीनां विशेषस्तु अनंगरंगपंचसायकयोर्द्रष्टव्यः ॥ २ ॥ शिरसः शिर आरभ्य ॥ इमानि चंद्रकलास्थानानि ज्ञात्वा तत्तत्तिथौ कामिभिस्तत्तदंगं पीडनीयं, यतो

कृष्णे पक्षे, अंगुष्ठमूलात्प्रभृति, क्रमेण, यावच्छिखामूलं, कामः उपैति प्राप्नोति। तथैव शुक्लपक्षे, शिरसः शीर्षादारभ्य चरणाग्रदेशं, नित्यं कामः प्रयाति गच्छति॥ ३ ॥

अङ्गुष्ठमूलेषु अ, आ च जङ्घा-
युगे, इ ऊरावपि, ई च योनौ।
नाभ्यां उ, ऊ कुक्षतटे, कुचे ऋ,
करे तथा ॠ, ऌ च कण्ठदेशे ॥ ४ ॥
ॡ चाधरे, ए सततं कपोले,
नेत्रे च ऐ, कर्णयुगे तथा ओ।
शिखाश्रये औ कथितो रतज्ञैः,
सर्वाङ्गदेशे च सदैव अं अः ॥ ५ ॥
सर्वाङ्गदेशे मदनस्य बीज-
मिष्टाक्षरं सेन्दु सविन्दुशीर्षम्।
बीजं शरच्चन्द्रकलावदातं
संचोदयेत्सूर्यनिभं प्रदीप्तम् ॥ ६ ॥

एतेषु स्थानेषु मदनस्य बीजं सेन्दु सबिन्दुशीर्षं न्यस्ताक्षरं, बीजं कथंभूतः-(तं)? शरच्चन्द्रकलावदातं श्वेतं, सूर्यनिभं प्रदीप्तं, संचोदयेत् प्रेरयेत् ॥ ४।५।६ ॥

---

**पा०**—मूले अ (स. पु.)। युगे इइ ¯ जानुन्यथ ई''' कुक्षि। नाभावदु कुक्षितटे (स. पु.) ॥ ४ ॥ **कपाले** (स. पु.)। औ च सदेव अं अः (स. पु.) (प्रभ्रष्टाक्षरः पाठः) औ च सदैव कार्यं ॥ ५ ॥ सर्वाङ्गकाये (स. पु.)। बीजं **न्यस्ताक्षरं** (स. पु.)। संयोजनात्सूर्य० (बी) सर्वांगकाये''' जं न्यस्ताक्षरं''' करावदातं सन्नोदत्राश्चर्यनिभं ॥ ६ ॥

---

निर्दिष्टतिथौ उक्तस्थाने कामो विशेषेण वसति, स च तत्तदंगपीडनप्रकारविशेषेण तृप्तो भवति। ते च भिन्नाः प्रकाराः अनंगरंगपंचसायकाभ्यां वेदितव्याः ॥ ३ ॥

**टि०**—इतश्चतुर्भिस्तंत्रोक्तं स्वरमातृकान्यासप्रकारं फलसहितमाह ॥ तत्र सर्वत्र मंत्रशास्त्रानुसारेण अत्रोक्तप्रकारेण बिंदुवर्जिताः, अं आंइत्यादिरीत्या सबिंदुका वा, स्वरविन्यासाः कर्तव्या इति ज्ञेयम् ॥ ५ ॥ मदनस्य बीजं क्लीं इति प्रसिद्धम्। संचोदयेत् प्रेरयेत् ॥ ६ ॥

विभावयेत्तद्दयिताशरीरे
ततो निरुन्मेषविलोचनायाः ।
( नितान्तनिःस्यन्दितनोः प्रियायाः )
विहाय बाह्यान् विभवान् भवेयुः ॥ ७ ॥
मु(सु?)खे निलीनानि षडिन्द्रियाणि
( तृप्तानि सर्वाणि भवन्ति तन्व्याः ) ॥ (७) ॥

दयिताशरीरे तन्मन्त्रं विभावयेत् । ततस्तदनन्तरं, निरुन्मेषविलोचनायाः कामिन्याः, बाह्यान् विभवान् विहाय, मुखे षडिन्द्रियाणि निलीनानि भवेयुः ॥ ७ ॥

तथा चाह महेश्वरः—

इति चिन्तितमात्रेण स्त्रीणां तृप्तिः प्रजायते ।
विनाऽपि योनिलिङ्गाभ्यां संसर्गेण वरानने ॥ ८ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे मदनोदयो नाम
सप्तदशः परिच्छेदः ॥ ]

इति अनेन प्रकारेण, हे वरानने, योनिलिङ्गाभ्यां विनाऽपि चिन्तितमात्रेण संसर्गेण, स्त्रीणां तृप्तिः प्रजायते ॥ ८ ॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां
मदनोदयो नामैकादशः परिच्छेदः ॥

---

मुखं चतुर्विंशतिनाडिकानां
मदावहानां मदनातपत्रम् ।
नारीवराङ्गोदरमध्यवर्ति
प्रचोदयेत्र्यक्षरबीजयुक्तम् ॥ १ ॥

---

पा०—( नितांतेत्यादिपादः तृप्तानीत्यादिपादश्च स. पुस्तके न स्तः ) । ततो न्वनुद्धाव्य विलो''' नितांत''' बाह्यान्विषयान् ॥ ७ ॥ तथा चाह महेश्वरः इति स. पु. नास्ति । शंभुः । स्त्रीणां सिद्धिः''' लिंगाभ्यां संबंधेन''' ॥ ८ ॥

---

टि०—स्त्रिया अंगुष्ठमूलादिदेशेषु अंइत्यादीनि बीजानि विन्यस्य, क्लींबीजं तस्याः शरीरे विभावयेत् चिंतयेत् ध्यायेत् । निरुन्मेषत्वादिकं तस्यास्तृप्तिलक्षणम् ॥ ७ ॥ अत्रार्थे महेश्वरसंमतिमाह तथेति ॥ ८ ॥ इति सप्तदशः (॥ १७ ॥)

टि०—अस्मिन्परिच्छेदे स्त्रीणां मदावहानां नाडीनां निरूपणं तासां क्षोभणमन्त्रां-

चतुर्विंशतिनाडिकानां मदावहां(हानां) मदनातपत्रं मुखं, त्र्यक्षरबीजयुक्तं नारीवराङ्गोदरमध्यवर्ति, प्रचोदयेत् प्रेरयेत् ॥ १ ॥

**उच्चारितानां क्रमशः कलानां**
**द्वितीयकं पञ्चदशस्थमेकम् ।**
**विसर्गमध्यं प्रणवादिमन्त्र-**
**मुद्धातयेत्र्यक्षरनामधयेम् ॥ २ ॥ ॐ आः अं ॥**

उच्चारितानां कलागं(नां ?) स्वराणां, द्वितीयाक्षरः दशमाक्षरश्च, मध्ये विसर्गः, आदौ प्रणवः, त्र्यक्षरनामधेयं उद्धातयेत् उद्धारयेत् ॥ ॐ आः अं ॥ २ ॥

**संप्राप्य बालां करशाखयैव**
**लिङ्गेन चात्मीयसमां समेत्य ।**
**लिङ्गाङ्गुलिभ्यां तु तथाऽभिरूढां**
**प्रचोदनीयं मदनातपत्रम् ॥ ३ ॥**

बाला करशाखयैव, लिङ्गेन चिह्नेन, क्रमशः आत्मीयसमां समेत्य प्राप्य, अभिरूढां प्रति लिङ्गाङ्गुलीभ्यां मदनातपत्रं प्रचोदनीयम् ॥ ३ ॥

**ॐ कामदेवाय इदम् मे हर्षय हर्षय स्वाहा ॥ क्षोभन(ण)मन्त्रः ॥**

**द्वे लोचने, द्वे वदने, तथैका**
**तुण्डे, स्थिता वै मुखचोद्यनाड्यः ।**
**अङ्गुष्ठमूलाश्रितनाडिका तु**
**तथा पदाङ्गुष्ठनखेन चोद्या ॥ ४ ॥**

---

पा०—बाला (बी; स. पु.) ङ्गुलीभ्यां (स. पु.) ॥ ३ ॥ तुन्दे (स. पु.)। स्थितास्ता (स. पु.) ॥ ४ ॥

---

श्चाह । अन्नत्यो मंत्रविषयोऽन्यत्र न दृष्टः ॥ मुखमिति । मदो नाम स्त्रीणां संभोगेच्छा, तं आवहन्ति जनयन्ति ता नाड्यश्चतुर्विंशतिसंख्याकाः, तासां सर्वासां मुखं निर्गमनस्थानं मदनातपत्रं, तथा चोक्तं रतिरहस्ये—"मदनसदनरंध्रादूर्ध्वतो नासिकाभं सकलमदशिराढ्यं मन्मथच्छत्रमाहुः ।" (१०।७) इति, (शिराः नाड्यः ।) इदं 'इंग्लिष्'भाषायां 'क्लिटोरिस्' इति संज्ञितम् । त्र्यक्षरेत्यादि क्रियाविशेषणं, प्रचोदयेत् प्रेरयेत् ॥ १ ॥

टि०—त्र्यक्षरबीजं विवृणोति उच्चारितानामिति । उद्धातयेत् मंत्रोच्चारपूर्वकं अंगुल्यादिना मदनच्छत्रं घर्षयेदिति भावः ॥ ॐ इत्यादिः मंत्रोद्धारः ॥ एवमग्रेऽपि बोध्यम् ॥ २ ॥ बालादीनां नायिकानां मदनच्छत्रसंक्षोभणक्रियाप्रकारानाह संप्राप्येति । करशाखा

लोचने द्वे नाडिके, वदने द्वे नाडिके, तुन्दे(ण्डे) मुखे एका नाडी स्थिता, ताः नाड्यः मुखेन चोद्या मुखचोद्याः । अङ्गुष्ठमूलाश्रितनाडिका पदाङ्गुष्ठनखेन चोद्या चारणीया ॥ ४ ॥

कर्णोरुपार्श्वत्रिकमस्तकेषु
संचोदनीयाः करजैन नित्यम् ।
तृप्तिर्न तासां तु विपर्ययेण
भवेत्कदापीति वदन्ति धीराः ॥ ५ ॥

कर्णे उरौ पार्श्वे त्रिके कटौ मस्तकेषु करजेन नित्यं संचोदनीयाः, विपर्ययेन-(ण) तासां स्त्रीणां तृप्तिर्न भवेत्, धीराः पण्डिताः एवं वदन्ति ॥ ५ ॥

वायव्यावृतवह्निमण्डलगतं हान्तं स्वरैर्वेष्टितं
सिन्दूरारुणमिन्दुबिन्दुसहितं बीजं त्रिलोक्याऽर्चितम् ।
पान्थैरात्मनितम्बिनीखगमुखे ध्येयं हिताकाङ्क्षिभिः
स्वप्नेनापि न ताः प्रयान्ति वशतां तेनान्ययूनां सदा ॥६॥ ह्क्ष्यं ॥

हान्तं क्षकारं, किंभूतम् ? वायव्यावृतवह्निमण्डलगतं, किंभूतम् ? स्वरैर्वेष्टितं अकारादिस्वरवृतं, सिन्दूरवदरुणं, इन्दुबिन्दुसहितं नादबिन्दुयुतं, किंभूतम् ? त्रिलोक्यार्चितं त्रि(त्रै ? )लोक्यपूजितं, आत्मनितम्बिनीखगमुखे भगे, पान्थैः हिताकाङ्क्षिभिः इदं मन्त्रं कार्यं, ताः स्त्रियः अन्ययूनां तेन कारणेन सदा वशतां स्वप्नेनापि न प्रयान्ति ॥ ६ ॥

---

पा०—रायव्यावृत ( बी ) । त्रिलोक्यर्चितं ( बी ) । मुखे कार्यं ( स. पु. ) । ह्क्ष्यं इति स. पु. नास्ति ॥ ६ ॥

---

अंगुलिः । आत्मीयसमा युवती । ॐकामदेवायेत्यादिमंत्रोच्चारेण सह करशाखादिना क्षोभयेदित्यर्थः ॥ ३ ॥ अपरासां नाडीनां स्थानानि तत्क्षोभणोपायांश्चाविष्कुरुते द्वे इत्यादिना । तुण्डं मुखम् । लोचनादिषु गताः पंच नाड्यः मुखेन चोद्या नाम चुंबनेन संक्षोभ्याः । अंगुष्ठः पादांगुष्ठः ॥ ४ ॥

टि०—त्रिकं पृष्ठास्थ्नोऽध ऊर्वोः संधौ त्रिसंघट्टः । मस्तकं शीर्षम् । करजः नखः । विपर्ययेण संक्षोभणाभावे इति भावः ॥ ५ ॥ पांथैः प्रस्थानोद्यतैः प्रवत्स्यद्भिः । खगः भगः । अन्ययूनां पत्युर्विरहकाले अन्यकामुकानाम् ॥ ६ ॥

प्रातःसूर्यमरीचिरेव बलकृत् पिण्डो वराङ्गोदरे
दृष्टो नामविभूषितः सचपलो बिन्द्विन्दुनादान्वितः ।
ध्यातो भास्वरपद्मरागरुचिरः सीमन्तिनीचिन्तितं
सप्ताहेन वशं नयत्यथ पुरं याम्यं प्रियादर्शने ॥ ७ ॥

बलकृत् वकारः, पिण्डो लकारः, पुरुषनामविभूषितः, बिन्द्विन्दुनादाङ्कितः नादबिन्दुविभूषितः, वराङ्गोदरे दृष्टः ध्यातः, सप्ताहेन निश्चितं वशं नयति, अथ स्वमरणे प्रियादर्शने याम्यपुरं नयति । कथंभूतो मन्त्रः ? प्रातःसूर्यमरीचिवत्, पुनः कथंभूतः ? भास्वरपद्मरागरुचिरः रक्तवर्ण इत्यर्थः ॥ व दे ब्लूँ द त ॥ ७ ॥

रेफस्थं सविसर्गमीश्वरयुतं सान्तं पिशङ्गद्युति
विन्यस्तं मदनातपत्रशिखरे स्त्रीणां परं द्रावकम् ।
यस्यैकस्य वशात् पुमानशिथिलश्रद्धाभियोगान्वितः
पिण्डाकृष्टिमशीघ्रमेव कुरुते प्राप्तोपदेशः शुचिः ॥८॥ ह्रीः॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे नाडीसंक्षोभकरण–भावना-
चक्रोपदेशो नामाष्टादशः परिच्छेदः ॥ ]

सान्तं हकारं, रेफस्थितं, ईश्वरियुतं दीर्घईकारयुतं, सविसर्गं, पिशङ्गद्युति, स्त्रीणां मदनातपत्रशिखरे विन्यस्तं, परं अतिशयेन, द्रावकं, यस्य एकस्य मन्त्रस्य वशात्, पुमान् पुरुषः, अशिथिलश्रद्धाभियोगान्वितः उत्तमश्रद्धावान्, अशीघ्रमेव, पिण्डाकृष्टिं शरीराकर्षणं, कुरुते । कथंभूतः ? प्राप्तोपदेशः, शुचिः पवित्रः ॥ ह्रीः ॥८॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां
नाडीसंक्षोभण–भावनाचक्रोपदेशो नाम द्वादशः परिच्छेदः ॥

---

सती चैवासतीसंज्ञा सुभगा दुर्भगा तथा ।
पुत्री दुहित्रिणी चेति षडेता मदनाडिकाः ॥ १ ॥

---

पा०—बलहृत् (बी) । सुचपलो ( स. पु. ) । भास्कर (बी) । सीमन्तिनीनिश्चितं ( स. पु. ) । ब्लूँ ब्लँ ब्लैँ ( बी ) ॥ ७ ॥ ईश्वरियुतं ( स. पु. ) । शिथिलः श्र० ( बी )। पिण्डीकृत्रिमगाहया प्रकु०( बी ) । ॥ ह्रीः ( स. पु. अत्र नास्ति ) ॥ ८ ॥

---

टि०—प्रियादर्शने प्रियायाः स्वस्या अदर्शने याम्यं यमसंबंधिनं पुरं नयति मृत्युं प्रापयति ॥ ७ ॥ अशिथिला दृढा । पिंडाकृष्टिं स्त्रीशरीरस्याकर्षणम् । अशीघ्रं न तु तत्कालं, नापि चिरेण, अपि तु मंत्रावृत्तिफलपरिपाककाले इति भावः ॥८॥ इति अष्टादशः॥(॥१८॥)

षडेते(ताः) मदनाडिकाः अहंकारिणीनाडिकाः। तदेवाह—सती, असती, सुभगा, दुर्भगा, पुत्री, दुहित्रिणी चेति ॥ १ ॥

**योनिमात्रेऽपि सन्त्येताः कथिता मदनाडिकाः ।**
**सती वामेऽसती सव्ये, द्वे वराङ्गत्वचि स्मृते ॥ २ ॥**

एताः कथिताः मदनाडिका नाड्यः योनिमात्रेऽपि सन्ति । वामे नाडी सती । सव्ये दक्षिणे असती । एते द्वे नाड्यै वराङ्गाद्भगाद्विनिःसृते ॥ २ ॥

**किञ्चिदभ्यन्तरे चैव रन्ध्रे सव्यापसव्ययोः ।**
**दुर्भगा सुभगा चैव द्वे नाड्यौ समुदाहृते ॥ ३ ॥**

सव्यापसव्ययोर्मध्ये रन्ध्रस्य किञ्चिदत्यन्तरे दुर्भगा सुभगा द्वे नाड्यौ समुदाहृते ॥ ३ ॥

**सर्वतोऽभ्यन्तरे चैव पार्श्वे खगमुखस्य वै ।**
**वामे पुत्री समाख्याता, दक्षिणेन दुहित्रिणी ॥ ४ ॥**

खगमुखस्य सर्वतोऽत्यन्तरे पार्श्वे वामे पुत्री, दक्षिणेन दुहित्रिणी नाडी, समाख्याता कथिता ॥ ४ ॥

**सतीसंचोदनाच्चैवासती रामा प्रकुप्यति ।**
**असतीचोदनान्नारी खिद्यते च सती सदा ॥ ५ ॥**

सतीसंचोदनात् चारणात् असती कुप्यति । असतीचारणात् सती खिद्यते दुःखं प्राप्नोति, सदा सर्वदा ॥ ५ ॥

---

**पा०—द्वे वराङ्गाद्विनिःसृते** ( स. पु. ) ॥ २ ॥ किञ्चिदत्यन्तरे चैव रन्ध्र० ( स. पु ) ॥ ३ ॥ ०तोऽत्यन्तरे ( स. पु. ) ॥ ४ ॥ असतीचोदनाच्चैव (वी) ॥ ५ ॥

---

**टि०—**पूर्वस्मिन् परिच्छेदे द्वे लोचनयोः, द्वे वदनस्य वामदक्षिणपार्श्वयोः, एका मुखे, द्वे पदांगुष्ठयोः ( श्लो. ४ ), द्वे कर्णयोः, द्वे ऊर्वोः, द्वे पार्श्वयोः, एका त्रिके, एका शिरसि (५), एका भगमुखे (६), एका वरांगदेशस्य बाह्यमध्यभागे (७), एका मदनातपत्रशिखरे (८), इति आहत्य अष्टादश नाड्यो विवेचिताः। अपरे द्वे चूचुकगते अपि स्तः, तेऽत्र नोक्ते । अस्मिन्परिच्छेदे शेषाणां षण्णां योन्यभ्यन्तरे एव स्थितानां विशेषादिकमाह ॥ एतत्परिच्छेदस्थो विषयोऽन्यत्र नोपलब्धः ॥ 'योनिमध्ये' इति पाठो भवेत् । सव्ये दक्षिणभागे । त्वचि त्वचं व्याप्येति भावः ॥ २ ॥ अपसव्यः वामभागः ॥ ३ ॥ खगमुखं भगमुखं अपरं अंतःस्थं इति भावः ॥ ४ ॥ संचोदनात् लिंगेन क्षोभणात् । असती व्यभिचारिणी ॥ ५ ॥

**सतीसंचोदनादेव सती हृष्यति निर्भरम् ।**
**असतीचोदनाच्चैवासती तुष्यति नित्यशः ॥ ६ ॥**

सतीसंचोदनादेव निर्भरं यथा स्यात्तथा सती हृष्यति । असतीचारणात् नित्यशः असती तुष्यति ॥ ६ ॥

**सुभगाचोदनान्नारी सुभगा प्रियदर्श(र्शि)नी ।**
**भवेत् स्निग्धाननाङ्गी च श्यामा पीनपयोधरा ॥ ७ ॥**

सुभगाचारणान्नारी सुभगा प्रियदर्श(र्शि)नी, स्निग्धाननाङ्गी श्यामा पीनपयोधरा भवेत्, पीनं कठिनम् ॥ ७ ॥

**दुर्भगाचोदनेनापि वनिता दुर्भगा भवेत् ।**
**रुक्षा कृशा विवर्णाङ्गी जरारोगनिपीडिता ॥ ८ ॥**

दुर्भगाचारणेनापि वनिता स्त्री दुर्भगा भवेत्, रुक्षा अस्निग्धा, कृशा, विवर्णाङ्गी, जरारोगेण निपीडिता भवेत् ॥ ८ ॥

**पुत्रीसंचोदनादेव प्रिया पुत्रवती भवेत् ।**
**दुहित्रीचोदनेनापि दुहिता जायते ध्रुवम् ॥ ९ ॥**

पुत्रीनाडीचारणात् प्रिया स्त्री पुत्रवती भवेत् । दुहित्रीचारणेन स्त्रिया दुहिता जायते, ध्रुवं निश्चितम् ॥ ९ ॥

**उभयोश्चोदनात्सूते क्लीबमेव न संशयः ।**
**निपुणं चोदयेन्नाडीं यदीच्छेद्धितमात्मनः ॥ १० ॥**

उभयोः पुत्रीदुहित्रीनाड्योश्चारणात् क्लीबं नपुंसकं सूते, अत्र संशयो न ॥ १० ॥

**मतान्तरमाह—**

**सती कुचेऽसती कक्षे, सुभगौष्ठे च, दुर्भगा ।**
**त्रिके, तुण्डे स्थिता पुत्री, नितम्बे तु दुहित्रिणी ॥ ११ ॥**

---

पा०—दुर्भगा बलिता (बी) ॥ ८ ॥ निपुणाश्चो० (बी) ॥ १० ॥ मतान्तरमाह इति, ११ श्लोकश्च स. पु. न स्तः ॥ सुभगोष्ठे (बी) ॥ ११ ॥

---

टि०—अनेन दुर्भगाक्षोभणवर्जनं सूचितम् ॥ ८ ॥ अनेन ईप्सितपुत्राद्युत्पत्तिकरणविषयकं रहस्यमाह ॥ ९ ॥ मतान्तरं उक्तसत्यादिनाडीस्थानविषयकम् । अस्मिन्मते नाडीक्षोभणं तु क्रमेण कुचयोर्मर्दनेन, कक्षयोर्नखक्षतैः, अधरोष्ठे पानेन, त्रिके संवाहनेन, मुखे चुंबनैः, नितंबे प्रहरणनखक्षतदंतच्छेद्यैः, कर्तव्यम् ॥ ११ ॥

एवं संचोदिता नारी नान्यमिच्छति मानवम् ।
क्लीबोऽपि हृदयं सर्वं प्राप्नोत्येवं न संशयः ॥ १२ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे मदनाडीस्वभावाख्यानं नामोनविंशतिः परिच्छेदः ॥ ]

एवं अनेन प्रकारेण, संचोदिता नारी अन्यं मानवं न इच्छति । क्लीबोऽपि नपुंसकोऽपि तस्याः सर्वं हृदयं प्राप्नोति एवं, संशयो न ॥ १२ ॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां मदनाडीस्वभावाख्यो नाम त्रयोदशः परिच्छेदः ॥

---

नखदशनपदेषु मन्दभावाः
प्रहरणकर्षणचुम्बने विरागाः ।
अकुटिलमतयश्चरित्रवत्यो
मृदुरतयोऽपि च मध्यदेशनार्यः ॥ १ ॥

---

पा०—क्लीबो हृदयसर्वस्वं (बी) । प्राप्नोत्येव (बी) ॥ १२ ॥

पा०—पदे सुमन्द (बी) । मृदुमतयो (बी) ॥ १ ॥

---

टि०—एवं नाडीज्ञानपूर्वकं, संचोदिता संक्षोभिता ॥ १२ ॥ इत्येकोनविंशतिः ॥ (॥ १९ ॥)

टि०—अस्मिन् परिच्छेदे देशसात्म्यमाह, यतः " उपचारो नारीणां रुचिरो देशानुसारतो भवति । " इति (कंदर्पचूडामणौ) उक्तम् । तत्र सात्म्यं द्विविधं प्रकृतिसात्म्यं देशसात्म्यं च । तत्र पूर्वं बलीयः इति केचन । प्रकृतिसात्म्यं तु वातपित्तकफकृतम् । तेन स्त्रीणां वातलापित्तलाश्लेष्मलेति त्रयो भेदा जायंते । तत्र पित्तला—उष्णतनुः क्षारगंधिस्वेदा उष्णप्रशिथिलस्मरागारा क्षणमात्ररतिप्रिया च भवति । श्लेष्मला तु सात्त्विकी गाढद्वारा अतिशिशिरमांसलस्मरमंदिरा च भवति । उभाभ्यां भिन्ना वातला इत्यादिकं रतिरत्नप्रदीपिकायाम् ॥ देशसात्म्ये तु स्त्रीणां जन्मदेशविभागपरत्वेन चुंबनादिचतुःषष्ट्यां अन्यान्येषु रागस्य न्यूनाधिक्यं वर्तते, तदत्र प्रकाश्यते । अयमुपदेशः परदेशीयरामाभिः कृतोद्वाहानां नानादेशावलोकननिरतानां प्रवासिनां चेति बोध्यम् ॥ नखेति । मंदभावा अनतिरक्ताः । प्रहरणं हस्तताडनम् । कर्षणं केशाकर्षणम् । अकुटिलेति त्रिभिस्तासामार्यत्वं प्रोक्तम् । अकुटिलमतयः सरलाशयाः । चरित्रवत्यः सुशीलाः । मृदुरतयः चण्डघाताद्यसहाः ॥ मध्यदेशः— " गंगायमुनयोर्मध्ये यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥ " इत्युक्तः ॥ स च इदानीं 'अलाहाबाद–आग्रा–दिल्हीत्यादि' देशात्मकः । अत्र समनंतर-

मध्यदेशस्थं नार्यः, नखदशनपदेषु नखदन्तावातेषु, मन्दभावाः; प्रहरणकर्षण-चुंबने, विरागाः रागरहिताः; अकुटिलमतयः वक्रभावशून्याः; चरित्रवत्यः सुचरित्र-युक्ताः; मृदुरतयः कोमलक्रीडाः ॥ १ ॥

**नखदशनपदे विरक्तचित्ताः**
**प्रहरणचुम्बरताश्च लाटनार्यः ॥**
**— तदुदितवनिताजनस्य चेष्टा**
**प्रभवति पश्चिमदेशसुन्दरीषु ॥ २ ॥**

लाटनार्यः लाटदेशनार्यः, नखदन्तस्थाने विरक्तचित्ताः, प्रहारचुंबननिरताः ॥ पश्चिमदेशसुन्दरीषु पूर्वश्लोकोदितवनिताजनस्य चेष्टा ॥ २ ॥

**पशुकरणरते कृतानुरागाः**
**सुपरिश्लेषकचग्रहप्रसाध्याः ।**
**नखदशनपदे सतृष्णभावा**
**लघुसुरता अपि सिन्धुदेशनार्यः ॥ ३ ॥**

सिन्धुदेशनार्यः एवंप्रकारा भवन्ति, तदेवाह—पशुसमसुरते कृतानुरागो याभिस्ताः, सम्यगालिंगनकेशग्रहसाध्याः; नखदन्तक्षतेषु लब्धभावाः, लघुसुरताः अल्पक्रीडाः ॥ ३ ॥

---

**पा०—चुंबने(न ?)प्ररता ( बी ) ॥ २ ॥ पदेषु तृष्ण० ( स. पु. )॥ ३ ॥**

---

भूतेषु त्रिषु श्लोकेषु च पुष्पिताग्रा वृत्तम् ॥ १ ॥

**टि०—**रता इत्यनेन स्वयमेव 'धृष्टत्वोद्भटत्वेन' तत्कुर्वन्ति इति द्योत्यते ॥ लाट-देशः-भरुकच्छः दक्षिणगुर्जरदेशः, सांप्रतं 'भरुच' इति प्रसिद्धः ॥ पश्चिमदेशः—अपरान्तः कुंकुण इति वा ख्यातः, सह्याद्रिसमुद्रयोर्मध्ये स्थितः, कोलाबा-कनारा-थाणा—रत्नागिर्याख्य-प्रदेशमयः॥ २ ॥ पशुकरणं—अस्मिन्नेव ग्रंथे ( ३।१।१ ) वर्णितं, अधोमुखबंधः, तदुक्तं स्मर-दीपिकायां—" स्त्रियमानतपूर्वांगीं पादाहितकरद्वयाम् । धृतोदरो रमेत्कामी बन्धोऽयं पशु-नामकः ॥ " इति, स च धेनुक-मार्कट-मार्जार-शौनक-गार्दभबंधादिभेदैर्विभक्तः ॥ सुपरिश्लेषः दृढालिंगनम् । कचग्रहः केशाकर्षणम् । प्रसाध्याः वशीकर्तव्याः । लघुसुरताः अदीर्घका-लीनसंभोगाः, शीघ्रतृप्ता इति भावः ॥ सिंधुदेशः—मरुदेशस्य पश्चिमे, यस्मिन् सिंधुनदः प्रवहति, इदानीं 'सिंध' इति च ख्यातः ॥ अत्र छंदोभंगादिदोषवत्त्वात् द्वितीयपादपाठ-श्चित्यः ॥ ३ ॥

गिरिकुहरवनेषु तत्स्वभावाः;
कुरुमरुदेशकुरङ्गलोचनाश्च ॥
विविधरतिरताः कलासु कल्पा-
श्चतुरतरा अपि सिंहले मृगाक्ष्यः ॥ ४ ॥

कुरुदेशमरुदेशकुरङ्गलोचनाः नार्यः, गिरिकुहरवनेषु तत्स्वभावाः पर्वतगह्वर-वनेषु निरतस्वभावाः ॥ सिंहलद्वीपे मृगाक्ष्यः स्त्रियः, विविधरतिरताः विविधसुरत-निरताः, कलासु कल्पाः चतुःषष्टिकलासु निपुणाः चटुर( ल ? )पुरुषरताः ॥ ४ ॥

वैदग्ध्यवासाः शुचयो गुणाढ्या
भवन्ति काश्मीरनितम्बवत्यः ॥
आचारहीनाः कृतघातसाध्या
भवन्ति जालन्धरदेशरामाः ॥ ५ ॥

काश्मीरनितम्बवत्यः नार्यः, विविधगन्धामोदितवयोगुणसंयुक्ताः भवन्ति ॥ जालन्धरदेशस्त्रियः आचारहीनाः आवातकरणसाध्याः वदन्ति ॥ ५ ॥

आलिङ्गने चित्ररतानुरक्ता
वेगान्विताः कृत्रिमलिङ्गसाध्याः ।
चुम्बाभिलाषाः सततं युवत्यः
स्त्रीराज्यजाः कोशलदेशजाश्च ॥ ६ ॥

---

पा०—चटुर(चतुर ? चटुल ? )रता ( स. पु. ) ॥ ४ ॥ **वासांशुवयो** ( स. पु. ) ( अक्षरसंभ्रमजोऽयं अशुद्धः पाठः टीकायां व्याख्यातः । ) साध्या **वदन्ति** ( स. पु. ) । देशवामाः ( स. पु. ) ॥ ५ ॥ आलिङ्गने चोग्र० ( बी ) ॥ ६ ॥

---

टि०—गिरीति । अनेन पर्वतीया वनजाश्चोद्दिष्टाः । तत्स्वभावाः गिर्यादिवासिनो यथा व्यवहारे मूढाः, तथा इमा अपि सुरते अनिपुणाः इति भावः ॥ कुरुदेशः–इदानीं ' थानेश्वर ' इति नाम्ना प्रसिद्धः, मरुदेशः–' मारवाड ' इति च । विविधरतिः चुंबनादिचतुःषष्टिः । कल्पाः न्याय्याः ॥ सिंहलः–'सिलोन' इति प्रसिद्धः द्वीपविशेषः ॥४॥ गांधारदेशजा अप्येतत्समानाः ॥ काश्मीरः–तन्नाम्नैव प्रसिद्धो देशः ॥ कृतघातसाध्याः–कृताः निर्वर्तिताः ये घाताः वात्स्याय-नीये द्वितीयाधिकरणे अष्टमाध्याये उपदिष्टानि मंथनादीनि पुरुषोपसृप्तकानि तैः साध्याः इत्यर्थः प्रतीयते ॥ जालंधरदेशः–तन्नाम्नैव इदानीमपि प्रसिद्धः पंचनद ( पंजाब ) मंडलस्य विभागः, यत्र ' लाहोर'नगरं वर्तते । अयं पुरा त्रिगर्त इति नाम्नाऽपि प्रसिद्ध आसीत् ॥५॥ चित्ररतानि वात्स्यायनीये ( २ अधि० ६ अध्याये ) प्रपंचितानि स्थितरतादीनि । वेगा-

स्त्रीराज्यजाः कोशलराज्यजाश्च एवं भवन्ति, आलिङ्गने, चित्ररताः अनुरक्ताश्च, वेगान्विताः, कृत्रिमलिंगसाध्याः, चुंबनप्रियाः, सततं निरन्तरम् ॥ ६ ॥

प्रचण्डवेगाः कृतघातसङ्गाः
सदोम्मदा इन्द्रियपानलुब्धाः ।
कराङ्गुलीकृत्रिमलिङ्गसाध्याः
कर्णाटदेशे कथितास्तरुण्यः ॥ ७ ॥

कर्णाटदेशे तरुण्यः कथिताः, प्रचण्डवेगाः, कृतघातगण्डाः कृतो घातो गण्डो यासां ताः, सर्वदा उन्मदाः उन्मत्ताः, इन्द्रियपानलुब्धाः, कराङ्गुलीकृत्रिमलिङ्गसाध्याः ॥ ७ ॥

सदा चतुःषष्टिकलाप्रसक्ता
रतास्तथालिङ्गनचुम्बनेषु ।
कराङ्गुलिक्षेपविधिप्रसाध्या-
श्चण्डा महाराष्ट्रकुरङ्गनेत्राः ॥ ८ ॥

महाराष्ट्रकुरंगनेत्राः स्त्रियः एवंप्रकारा भवन्ति, सदा चतुःषष्टिकलाप्रसक्ताः, आलिङ्गनचुंबनेषु रता निरताः, करांगुलीक्षेपन(ण)विधिप्रसाध्याः, चण्ड्यः प्रचण्डाः॥ ८॥

---

**पा०**—घातगण्डाः ( स. पु. ) ॥ ७ ॥ कलाप्रशस्ता ( बी ) । **चण्ड्यो** ( स. पु. ) ॥ ८ ॥

---

न्विताः कंडूतेराधिक्यात् खरवेगाः । अत एव कृत्रिमेति, (कृत्रिमलिंगं 'डिल्डो' इति यवनभाषायां व्यवहृतं, ) अपवस्तुनिवृत्तरुचयः इत्यर्थः । पूर्वार्धेन 'प्रचंडकंडूतिभगाः' (र. र. ५।१५)इति सूचितम् ॥ स्त्रीराज्यं–"वज्रवंतदेशात्पश्चिमेन स्त्रीराज्यं" इति कामसूत्रटीकायां जयमंगलायां, तच्च भूतस्थान('भोटांग' 'भोटान')समीपे आसीदिति केचित्॥ कोशलदेशः–अयोध्या इति विख्यातः ॥ ६ ॥

**टि०**—इंद्रियपानलुब्धाः–कामांकुशचूषणपराः औपरिष्टकरताः इति यावत् । करांगुलीति–तद्विधिं षट्त्रिंशे परिच्छेदे वक्ष्यति ॥ कर्णाटदेशः–तन्नाम्नैव प्रसिद्धः आंध्रदेशात्पश्चिमे रामनदश्रीरंगपत्तनयोर्मध्यवर्ती प्रदेशः, यस्येदानीं महीशूराख्यं नगरं राजधानी ॥ ७ ॥ चतुःषष्टिकलाः पांचालस्य बाभ्रव्यस्य संमताः आलिंगनाद्याः कामसूत्राद्युक्ताः गीताद्याश्च । गीताद्या चतुःषष्टिः कामसूत्रे ( १।३ ), काव्यालंकारसूत्रवृत्तिटीकायां कामधेनौ (१।३।७), रामचंद्रबुधेन्द्रकृते शृंगारशृंगाटकनाम्नि रुक्मिणीवल्लभव्याख्याने च, क्वचित् क्वचिद्भेदेन परिगणिताः ॥ महाराष्ट्रदेशः–'नर्मदाकर्णाटविषययोर्मध्ये' महाराष्ट्रविषयः, स च इदानीं 'पूना-शोलापुर-कोल्हापुरा'दिप्रदेशमयः ॥ पाटलिपुत्रिकाः अपि प्रायस्तादृश्यः ॥ ८ ॥

केशग्रहालिङ्गनचुम्बनेषु
जिह्वाप्रवेशे च विमर्द्दने च ।
संभूषणे मर्द्दनताडने च
सदाऽनुरक्ता द्रविडे रमण्यः ॥ ९ ॥

द्रविडे द्राविडदेशे, रमण्यः स्त्रियः, एवंप्रकारा भवन्ति, केशग्रहे, आलिंगने, चुंबने, जिह्वायाः प्रवेशः तस्मिन् जिह्वाप्रवेशे, विमर्द्दने, भूषणे, मर्द्दनताडने च, सदानुरागा रक्ताः ॥ ९ ॥

किमपि रसिकचित्तं चुम्बनालिङ्गनादा-
वधरमधुसमीहाऽत्यन्तलावण्यदेहाः ।
सुरभिसुरतभावास्तीर्थयात्राभिलाषा
मृदुलमधुरवाचो गौडवङ्गाङ्गनाः स्युः ॥ १० ॥

गौडवंगाङ्गनानां ईदृशाः रीतयः—चुंबनालिङ्गनादौ किमपि रसिकचित्तं, अधरमधुसमीहात्यन्तलावण्यदेहाः, सुरतौ सुरतभावाः, तीर्थयात्रायां अभिलाषाः, मृदुलकोमलमधुरवाचः ॥ १० ॥

आघाते मर्द्दने वा नखदशनपदे निःस्पृहाः क्षोभणे च,
नानाक्रीडाकलालंकृतिरतिमनसो मन्दवेगोपरागाः ।
दृष्ट्वा दूरेऽपि यूनः सपदि मनसिजावेशसाकाङ्क्षनेत्रा
नेपाले कामरूपे सुमधुरवचनाश्चीनदेशे च रामाः ॥ ११ ॥

---

पा०—संचुम्बने (बी) । सदानुरागा ( स. पु. ) ॥ ९ ॥ सुरतिसुरत० ( स. पु. ) । वंगागनानाम् ( स. पु. ) ॥ १० ॥ क्षोभणे वा ( बी ) । समधुर ( बी ) । देशे च वामाः ( बी ) ॥ ११ ॥

---

टि०—जिह्वाप्रवेशः मदनालये नायककर्तृकः औपरिष्टकभेदः । 'संभूषणे' इत्यत्र 'संचूषणे' इति पाठः स्यात्, संचूषणं च हरिहरकृतशृंगारदीपिकायामुक्तेषु दशसंस्कारेषु एकः, तच्च तत्रैव " अन्योन्यमुखवायुभ्यां पूरणं चूषणं स्मृतम् । " ( २।६१ ) इति लक्षितम् ॥ द्रविडदेशः कर्णाटदेशात् दक्षिणेन भारतवर्षस्य दक्षिणे भागे पूर्वापरसमुद्रसंबद्धयोः चोलकेरलदेशयोर्मध्यवर्ती ॥ इदं मलयदेशजानामप्युपलक्षणम् ॥ अत्रोक्तं ग्रंथान्तरविसंवादि ॥ ९ ॥ सुरभिः मनोहरः शुचिः कठोरचेष्टारहितो वा ॥ गौडदेशः वंगमहामंडलस्य उत्तरो विभागः, वंगश्च तस्यैव पूर्वीयो विभागः, तत्र गौडे संप्रति ढाका-राजशाही–फरीदपुरेत्यादयः विषयाः, वंगे च मल्द-मुर्शीदाबाद–नदिया–कालीघट्टादयः ॥ १० ॥ क्षोभणं चंद्रकलानां इति शेषः ।

नेपाले कामरूपे चीनदेशे च, रामाः स्त्रियः, ईदृशाः, आघाते मर्द्दने नखदन्ताघाते निःस्पृहाः, क्षोभणे च निःस्पृहाः, नानाक्रीडाकलालङ्कृतिरतिमनसो, मंदवेगोपरागाः मन्दवेगे उपरक्ताः, यूनः दूरेऽपि दृष्ट्वा, सपदि तत्क्षणादेव, मनसिजावेशसाकाङ्क्षनेत्राः मनसिजः कामः तस्य आवेशेन साकाङ्क्षे नेत्रे यासां ताः ॥ ११ ॥

**योषितां विषयसाम्यतः प्रियं चुम्बनं प्रकृतिकृत्यमिष्यते ।**
**तत्र चैकविषये प्रयुज्यतेऽभीप्सितप्रकृतिसाम्यतस्तदा ॥१२॥**

योषितां स्त्रीणां, विषयसाम्यतः, प्रियचुम्बनं प्रकृतिकृत्यं इष्यते; तत्र च एकविषये; अभीप्सितप्रकृतिसाम्यतः वाञ्छितस्वभावसाम्यतः, तदा तस्मिन्काले, प्रयुज्यते ॥ १२ ॥

**अन्यथा हि न सुखस्य साधनं**
**सर्वमेतदनपेक्षितं कृतम् ।**
**दुःसहेन शिशिरेण निर्भरं**
**पीडिते व्यजनमारुता इव ॥ १३ ॥**

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे देशविषयविभागो
नाम विंशतिः(विंशः) परिच्छेदः ॥ ]

अन्यथा, हि निश्चितं, एतत्सर्वं अनपेक्षितं विपरीतं सुखस्य साधनं न । तत्र एवं दृष्टान्तमाह—दुःसहेन शिशिरेण निर्भरं यथा स्यात् (तथा) पीडिते व्यजनमारुता इव ॥ १३ ॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां
विषयविभागो नाम चतुर्दशः परिच्छेदः ॥

---

पा०—चुम्बनप्रकृतिवत्त्वमि० (बी) ॥ १२ ॥ मारुता यथा (बी) ॥ १३ ॥

---

उपरागः रक्तिः ॥ नेपालदेशः चीनदेशः च तन्नाम्नैव संप्रत्यपि प्रसिद्धौ ॥ कामरूपदेशश्च करतोयानद्याः पूर्वे, संप्रति 'कामरु' 'आसाम' इति वा प्रसिद्धः, प्राग्ज्योतिषपुरं च तस्य राजधानी आसीत् ॥ ११ ॥

टि०—विषयः देशः । चुबनं आलिंगनादीनामुपलक्षणम् । प्रकृतिः स्वभावः ॥ १२ ॥ अन्यथा देशसात्म्यं अवगणय्य । एतत्सर्वं चुंबनादि, अनपेक्षितं देशस्वभावविरोधेन, कृतं निर्वर्तितम् ॥ पीडिते विषयसप्तमी ॥ १३ ॥ अत्र क्वचित्क्वचित् ग्रंथान्तरेभ्यो वैलक्षण्यं वर्तते, अत्र वर्णिताश्च काश्चन सिंहलनेपालादिदेशजाः अन्यत्र नोक्ताः ।

* सुशक्तिवह्निप्रविदार्यमाण-
सद्वक्त्रहृद्यस्तिमिताभिरामम् ।
यत्तालुजिह्वाजनितं प्रशस्तं
शृङ्गारविद्भिः स्तनिताभिधानम् ॥ १ ॥

---

पा०—*एतत्परिच्छेदस्य पूर्वं पुस्तकद्वयेऽपि, आलिंगनपरिच्छेदस्थाः आरंभगताः पञ्च श्लोका वर्तन्ते तत्तु लेखकप्रमादेन पृष्ठसंभ्रमात् जातं इति संभाव्यते ॥ स्वशक्ति (बी)। विदार्यमाणसद्वक्त्र (स. पु; बी) यदा तु जिह्वा (बी) ॥ १ ॥

---

तथा मालवाभीरादिदेशनारीणां च रतिस्वभावा अत्र नोक्तास्तेऽन्यतो ज्ञेयाः, यथा गुर्जरदेशोद्भवायाः—“उल्लासिधम्मिल्लभरा कृशाङ्गी पीनस्तनी चारुविलोचना च। प्रियोक्तिराभ्यंतरबाह्यभोगासक्ता विचित्राऽपि च गुर्जरी स्यात् ॥” इति रतिरहस्ये (२।१२) ॥ “लीलालया प्रेमनिधिः प्रियोक्तिः कलाकलापे चतुरा सुकेशी । मृद्वंगयष्टिर्लघुभोगहेतुः सौख्यैकचित्ता भुवि गुर्जरी स्यात् ॥” इति एतस्यैव पुस्तकान्तरे पाठः । “उपभोगरता सुलोचना लघुसंभोगविधिप्रतोषिणी । शुभवेषधरा विचक्षणा कथिता सा खलु गुर्जरी बुधैः ॥” इति अनंगरंगे (५।१२) ॥ “कुवलयदलवर्णा चारुताटंककर्णा चकितहरिणनेत्रा फुल्लराजीववक्त्रा । लघुनिधुवनरक्ता कष्टसंभोगसक्ता सुललितगतिरेषा गुर्जरी चारुवेषा ॥” इति पंचसायके (४९)॥ प्रकृते संग्रहश्लोकः—“आन्ध्री प्रेमनिबन्धनैकनिपुणा, नारी शुचिश्चौलिका, (‘आन्ध्री पीनपयोधरेणनयना, सर्वांगुणा दक्षिणी,’) कर्णाटी सुरतोपचारचतुरा, लाटी विदग्धप्रिया (‘सदा लंपटा’) । क्रूरा मालविका, कलासु निपुणा नित्यं महाराष्ट्रिका, सौराष्ट्री मृगलोचना सुवच(‘द’)ना, द्रव्यप्रिया गूर्जरी ॥” इति । रुद्रभट्टकृतायां अनंगदीपिकायां तु—“कर्णाटदेशोद्भवानां कामिनीनां योनौ संकीर्णता, गुर्जरदेशोद्भवानां कामिनीनां अधरो मनोहरः, काश्मीरदेशोद्भवानां नारीणां कुचौ कठिनौ, मरुदेशे चातुर्यं बहु, दक्षिणदेशे नार्यः सर्वगुणसंपूर्णाः, पश्चिमदिशि नारीणां मालिन्यं, उत्तरदिशि नार्यः भोगलंपटाः, पूर्वदिशि चातुर्यमधिकम् ॥” इति गुणवैशिष्ट्यमुक्तम् ॥ मुकुंदानंदभाणे च वेषमधिकृत्य विनोदपरः एकः श्लोकः—“चोलच्छन्ना यदि कुचतटी दुर्लभा गुर्जरीणां, कच्छाभावादलघु जघनं तर्हि शक्यावमर्षम् । तद्वयत्यस्तं द्रविडसुदृशामन्ततः किं ततः स्यादेकत्रैकं भवति सुलभं तद्वदन्यत्र चान्यत् ॥” (८१) इति ॥ इति विंशतितमः ॥ (॥ २० ॥)

टि०—अस्मिन् परिच्छेदेऽन्यकामशास्त्रेभ्यो विलक्षणतया सशब्दचुंबनमाह । अन्यत्र चुंबनानि, प्रहरणोद्भवानि सीत्कृतादीनि च पृथक्तयोक्तानि । तथापि “सर्वत्र चुंबनादिष्वपक्रान्तायाः ससीत्कृतं तेनैव प्रत्युत्तरम् ।” (२।७) इति कामसूत्रानुसारेण चुंबनप्रसंगे एव अव्यक्तध्वनिविशेषोद्भूतिमुपलक्ष्य प्रकृते सशब्दचुंबनसंकेतः कृत इति बोध्यम् । तच्च स्तनितादिसहायेन नायिकाप्रयोज्यमेव ॥ सुशक्तीति । वह्निः शरीरे आधारचक्रादूर्ध्वं वर्तमानोऽग्नि-

मुशक्तिवह्निना उदरस्थितवह्निना, प्रविदार्यमानं(णं) ऊर्ध्वश्वासेन विदार्यमानं(णं) दूरीकरणीयमानं, यत्सद्वस्त्रं, हृद्यं मनोहरं, तेन स्तिमिताभिरामं स्तिमितेन अभिरामं सुन्दरं, यत्तालुजिह्वाजनितं, शृंगारविद्भिः स्तनिताभिधानं प्रशस्तं आहुः ॥ १ ॥

हृष्यत्कपोतादिविहङ्गमानां
यथा रुतं कूजितमामनन्ति ॥
आयासनिःश्वासनिरोधहृद्यं
मनीषिणस्तच्छ्वसितं वदन्ति ॥ २ ॥

हृष्यत्कपोतादिविहंगमानां यथा रुतं शब्दं कूजितमामनन्ति ॥ तथैव आयासनिःश्वासरदादिहृद्यं—आयासः परिश्रमः, नि(ः)श्वासः श्वासः, रदादिर्दन्तादिः, तैर्हृद्यं मनोहरं; मनीषिणः तत् श्वसितं वदन्ति ॥ २ ॥

उच्छ्वासदन्तौष्ठजसीत्कृतं यत्
सीत्कारसंज्ञं विबुधास्तदाहुः ॥
श्लिष्टाधरोत्पादितपून्निदानं
पूत्कारमन्वर्थकनामधेयम् ॥ ३ ॥

यत् उच्छ्वासदन्तोष्ठजगृत्कृतं तत्, विबुधाः पण्डिताः, गृत्कारसंज्ञं आहुः ॥ श्लिष्टाधरेण उत्पादितं पूदिति यत् शब्दं तत् पूत्कारं, अन्वर्थकं नामधेयम् ॥ ३ ॥

---

**पा०**—निश्वासरदादिहृद्यं (स. पु.) ॥ २ ॥ ष्ठजगृत्कृतं यत् गृत्कारसंज्ञं (स. पु.) ॥ ३ ॥

---

शिखा या मनसा हृता मारुतं प्रेरयित्वा ध्वनिमाविर्भावयति । स्तनितं मेघवद्गंभीरध्वनित्वं, तच्च कंठात् हंशब्देन निष्पाद्यते ॥ स्तनितोपेतं चुंबनं स्तनितसंज्ञमिति भावः । एवमन्यत्रापि ॥ १ ॥

**टि०**—कूजितं—मुखस्य अन्तःस्थानं अन्तर्मुखं तत्र भवं अव्यक्तं शब्दितम् ॥ श्वसितं निःश्वासः, सूत्कृतमिति सूत्करणमिति च तस्य नामान्तरे इति जयमंगलायाम् ॥ २ ॥ सीत्कारः—यथा शीते सीत्कृतं मुखाज्जायते तदिव यद्भवति तत् ॥ पूत्कृतमित्यस्य स्थाने 'फूत्कृत'मिति कामसूत्रादौ । तच्च "फूत्कृतं बदरपातवज्जले ।" (१०।५६) इति रतिरहस्ये ॥ ३ ॥ हिंकृत् हिंकारः—"कंठनासिकाभ्यामूर्ध्वं गच्छन्मधुरो ध्वनिर्निष्पाद्यते" (जयमंगला) सः ॥ दूत्कृतं 'फूत्कृतं' इति क्वचित् पाठः 'ऊत्कृतं' इति च अनंगरंगे (१०।४७), तच्च प्रकारान्तरेण कामसूत्रे लक्षितं "वेणोरिव स्फुटतः शब्दानुकरणम् ।" इति ॥ इति एकविंशः ॥ (॥ २१ ॥)

**हिक्शब्दवच्छ्वासनिरोधपूर्वं**
**यच्चुम्बनं हिक्कृदिति प्रसिद्धम् ॥**
**सन्निष्पतन्मौक्तिकशब्दरम्यं**
**तद्दूत्कृतं सर्वजना वदेयुः ॥ ४ ॥**

[ इति पण्डितपद्म(श्री)विरचिते नागरसर्वस्वे—सशब्दचुम्बनानि सप्त—एकविंशतिः(ºविंशः) परिच्छेदः ॥ ]

हित्शब्दवत्, श्वासनिरोधपूर्वं, अर्थात् स्त्रियः यच्चुंबनं, तत् हिक्कृत् इति प्रसिद्धम् ॥ संनिःपतन्मौक्तिकशब्दरम्यं यथा स्यात् तथा चुंबनं, वरकामिजनप्रियं एतत् चुंबनं दूत्कृत् गदितम् ॥ ४ ॥

[ इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां—सशब्दचुम्बनानि—पंचदशः परिच्छेदः ॥ ]

---

**अव्यक्तरेखैर्नखरैः समस्तैः**
**रोमाञ्चकृत् सत्क्वणिताभिरामम् ।**
**स्तने कपोले च हनुप्रदेशे**
**प्रयोज्यतामुच्छुरितं प्रियायाः ॥ १ ॥**

अव्यक्तरेखैः नखरैः प्रियायाः स्तने कपोले हनुप्रदेशे प्रयोज्यतां उच्चरितं, कथंभूतमुच्चरितं ? रोमाञ्चकृत्, सत्क्वणिताभिरम्यं सशब्देन अभिरम्यं मनोहरम् ॥ १ ॥

---

पा०—चतुर्थः ( ४ ) श्लोकः स. पुस्तके अत्र नास्ति, परन्तु २५ परिच्छेदादनन्तर तत्र निवेशितः । तत्र पाठान्तराणि—हिच्छब्द० ( स. पु. ) । दूत्कृत्य तन्मौ० ( बी ) । दूत्कृत्तदेतद्वरकामिरुच्यम् । ( स. पु. ) ॥ ४ ॥

पा०—ºताभिरम्यं ( स. पु. ) । ºमुच्चरितं ( स. पु. ) ºमुच्चरतं ( बी ) ॥ १ ॥

---

टि०—अस्मिन् परिच्छेदे नखच्छेद्यानि तत्तदुचितस्थलनिर्देशेन सह आह । तदुचितसमयास्तु—"माने, नवीनसुरते, विरहे, प्रवासे, द्रव्यक्षयेऽथ विरतौ, च मदे प्रयोज्याः ।" ( ९।२१ ) इति अनंगरंगे । ( द्रव्यक्षये वीर्यच्युतौ इत्यर्थः । विरतौ सुरतान्ते । ) ॥ अव्यक्तेति । क्वणिताभिरामं "चटचटाध्वनियोजितान्तमंगुष्ठजाग्रनखताडनतो नखानाम् ॥" ( र. र. ८।३ ) इति ॥ अत्र पंचसायके विशेषः—' वक्षोजकंदर्पगृहाधरेषु देयं नवोढाप्रमदाजनानाम् । कंडूयनेनैव शिरोरुहाणां यत्सोपयोगं परिकीर्तयन्ति ॥ " इति; कंदर्पचूडामणावपि—" आच्छुरितं प्रयोज्यं मूर्ध्नः कंडूयने तथाऽङ्गस्य । संवाहनादिकर्मणि तद्वदिदं व्याकुलीकरणे ॥" इति ॥ १ ॥

वक्रोऽर्धचन्द्रः कथितो नखाङ्कः
सद्भिः प्रदिष्टः स्तनयोर्गले च ॥
यदा तु तौ सम्पुटतां प्रपन्नौ
ब्रूते तदा मण्डलकं मुनीन्द्रः ॥ २ ॥

स्तनयोर्गले च वक्रोऽर्धचक्रः नखाङ्कः, प्रदिष्टः सद्भिः कथितः ॥ यदा तौ संपुटतौ नखौ चन्द्राकारेण मिलितौ प्रयत्नात्, तदा मुनीन्द्रः मण्डलकं ब्रूते ॥ २ ॥

किञ्चिच्च दीर्घां क्षतिमूरुपृष्ठ-
श्रोणीतटे व्याघ्रपदं लिखन्ति ॥
दीर्घायतां तां प्रवदन्ति रेखां
स्थानं तदीयं यदनन्तरोक्तम् ॥ ३ ॥

ऊरुपृष्ठश्रोणीतटे किञ्चिद्दीर्घां व्याघ्रपदं क्षतिं लिखन्ति ॥ तां दीर्घायतां क्षतिं रेखां प्रवदन्ति । स्थानं तदीयं य(त्) अनन्तरोक्तं श्रोणीतटमित्यर्थः ॥ ३ ॥

---

**पा०—**°र्धचक्रः (स. पु.) । यदा नु तौ (बी) । संपुटतौ प्रयत्नात् (स. पु.) ॥ २ ॥ दीर्घोन्नतमू० (बी) । लिखंती (बी) । °यतं तं······रेखं (बी) । [ तृतीयश्लोकस्य चतुर्थपादपूर्वार्धादूर्ध्वं सप्तविंशतिपरिच्छेदस्य द्वितीयश्लोकस्य पूर्वार्धं यावत् ग्रन्थः बी. पुस्तके त्रुटिचिह्नितः ॥ ]

---

**टि०—**तौ अर्धचंद्रौ, संपुटतां प्रपन्नौ सम्मुखौ जातौ ॥ तत्स्थानानि रतिरहस्ये (८।४)—"स्थानं च तस्य भगमूर्धककुन्दरोरु।" इति, (भगमूर्ध नाभिमूलं वा जघनं, तत्र मंडलकं 'रशनानायकवदेव स्थितं' (ज. मं.) भवेत्। ककुंदरं नितंबस्थकूपकः, तदंतर्निहितं तत् 'प्रतिकूपकं' इव 'मनोहारि'। ऊरु इत्यत्र कामसूत्रे वंक्षणं (ऊरुसंधिः) निर्दिष्टं, तत्र तत् 'कर्णिकालंकारवत्' (ज. मं.) ॥ २ ॥ क्षतिं नखप्रहारम् । श्रोणीतटं कटिप्रदेशः । इदं व्याघ्रनखवद्वक्रं, तथा च कामसूत्रे—"सैव वक्रा व्याघ्रनखकमास्तनाग्रम्।" इति । (सैव रेखानामकं नखच्छेद्यम् ।) इदं रतिरहस्यादिषु नोक्तम् ॥ रेखा लेखा इत्यपि नाम । दीर्घायता द्व्यंगुला त्र्यंगुला वा । सा च प्रत्यग्रनखशिखरनिष्पाद्या । अनंतरोक्तं पूर्वोक्त-मूर्वादित्रयम् । "सर्वस्थानेषु नातिदीर्घा लेखा" इति तु कामसूत्रम् ॥ रतिरहस्यस्थं रेखा-लक्षणं (८।४) मंडलकस्य प्रमाणेन व्याख्यन् कांचीनाथो भ्रान्त एव ॥ ३ ॥

शशप्लुतं पञ्च नखव्रणानि
सान्द्राणि पृष्ठस्तनगुल्फदेशे ॥
स्तनस्य पृष्ठे विरलानि तानि
निगद्यतामुत्पलपत्रमेतत् ॥ ४ ॥

पृष्ठस्तनगुल्फदेशे, सान्द्राणि घनानि, पञ्च नखव्रणानि शशप्लुतं निगदितम् ॥ स्तनस्य पृष्ठे तानि पञ्च नखव्रणानि विरलानि, एतदुत्पलपत्रं निगद्यताम् ॥ ४ ॥

हित्वा कनिष्ठाङ्गुलिजव्रणानि
चतुर्नखानां विरलीकृतानाम् ।
कपोलदेशे स्तनमण्डले च
वदन्ति मायूरपदं मुनीन्द्राः ॥ ५ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे—नखपदान्यष्ट—
द्वाविंशतिः (°विंशः) परिच्छेदः ॥ ]

कपोलदेशे स्तनमण्डले च कनिष्ठाङ्गुलिजव्रणानि हित्वा चतुर्नखानां विरलीकृतानां व्रणानि, मुनीन्द्राः मायूरपदं वदन्ति ॥ ५ ॥ इति नखपदानि अष्टौ ॥ ८ ॥

रागाभिलक्ष्यं स्फुटमोष्ठदेशे
तद्गूढकं दन्तपदं वदन्ति ॥
उच्छूनकं स्यादधरे च सव्ये
गण्डे दृढालिङ्गनतस्तदेव ॥ १ ॥

---

टि०—सान्द्राणि ' सुलग्नानि ' संनिकृष्टानि अतिसमीपवर्तीनि । स्तनगुल्फः स्तनस्य गुल्फः ग्रंथिरिव, चूचुकं कुचाग्रं इत्यर्थः । अत्र सीमंतपार्श्वं इत्यधिकं स्थानं पंचसायके प्रोक्तम् ॥ उत्पलपत्रस्यान्यानि स्थानानि गुह्यं ( र. र. ८।६; अ. रं. ९।२७ ), मेखलापथः ( नाभिमूलं जघनं ) च ( का. सू. ) । " तद्धि स्मर्तुं प्रवासावसरे दिशन्ति " (९।२७) इत्यनंगरंगे ॥ ४ ॥ मायूरपदं मयूरपदकं वा । " पंचभिरभिमुखैर्लेखा चूचुकाभिमुखी मयूरपदकम् " इति तु कामसूत्रे तल्लक्षणम् । तत्र अंगुष्ठजस्य नखस्य चूचुकस्याधो निवेशः कर्तव्यः । प्रकृते कपोलदेशः अधिकत्वेनोक्तः, तदपि समीचीनम् ॥ ५ ॥ अष्टौ इति प्राधान्येन । अन्यान्यपि पक्षिकुसुमकलशाद्याकारवन्ति नखकर्माणि प्रयोक्तव्यानि इति कामसूत्रे । परकीयास्विमानि प्रच्छन्नप्रदेशेषु कर्तव्यानि; नखक्षतानि रागजननानि अनुस्मरणेन रागवर्धनानि वरकामिनीभिरत्यन्ताभिलषितानि चेत्युपदेशाः ॥ इति द्वाविंशः ॥ ( ॥ २२ ॥ )

टि०—रागः लौहित्यम् । अस्फुटत्वात् गूढकम् ॥ जातश्वयथुत्वात् उच्छूनकम् । सव्ये वामे ॥ १ ॥

स्फुटं निश्चितं, ओष्ठदेशे, रागाभिलक्ष्यं रागपूर्वकं; गूढकं आलिङ्गनं दन्तपदं वदन्ति ॥ अधरे सव्ये गण्डे दृढालिङ्गनतः तदेव उच्छूनकम् ॥ १ ॥

रदोष्ठसंज(य)न्त्रणतः प्रवाल-
मणिः कपोले कृतिना प्रयोज्यः ॥
द्विदन्तसन्दंशयतोऽधरान्तं(न्तर्)
द्विबिन्दुको बिन्दुरिति प्रसिद्धः ॥ २ ॥

रदोष्ठसंजन्त्रणतः दन्तओष्ठजत्रणात्, कृतिना पण्डितेन, कपोले प्रवालमणिः प्रयोज्यः कार्यः ॥ द्विदन्तसंदंशकृतः अधरान्तः द्विबिन्दुको बिन्दुः इति प्रसिद्धः ॥२॥

रदैरनेकैर्मणिबिन्दुमाला(ले?)
गले कपोले हृदये लिखन्ती(न्ति?) ॥
*तद्गण्डकाख्यं विषमैश्च कूटै-
र्वृत्त(त्तं?) स्तने नागरका वदन्ति ॥ ३ ॥

गले कपोले हृदये अनेकैः रदैः मणिबिन्दुमाला लिखन्ती, अनेकैः रदैः,

पा०—* अत्र स. पुस्तके पत्रभ्रान्त्यादिकारणात् अस्योत्तरार्धं "अङ्के स्थिताथ" इत्यादि ( परि. २४ श्लो ६ ) गृहीत्वा श्लोको व्याख्यातः, ततः परं च तत्रत्या आलिंगन-विषयका एव श्लोकाः ( ६।७।८।९ ) स्थापिताः । इदं सर्वं वैषम्यं समीकृत्य मूलस्य टीका-याश्च पाठः अत्र स्थापितः ॥ "तद्गण्डकाख्यं" इत्यादिकः परिच्छेदान्तः पाठः स. पुस्तके "जिह्वाप्रवेशो नाम" ( २६ ) परिच्छेदात् पूर्वं वर्तते ॥ ३ ॥

टि०—प्रियस्य प्रियाया वा, रदः दंतः उत्तरः, ओष्ठश्च अधरोऽत्राभिमतः । प्रवाल-मणिः-प्रवालः अधरः मणिः दंतः तत्तुल्यत्वात्, उभयोः संयोगः प्रवालमणिरित्यन्वर्थं नाम । अस्यैव 'विद्रुमः' इति संज्ञा पंचसायके । लोहितः क्षतविवर्जितश्चासौ । कपोले वामे इति भावः ॥ तृतीयपादे 'अधरान्तः' इति पाठ उचितः ॥ २ ॥ प्रवालमणिः संततो मणिमाला भवति, बिन्दुः संततो बिन्दुमाला भवति इति भावः । अत्र कक्षा वंक्षणः (जघनसंधिः) च अधिके स्थाने उक्ते कामसूत्रादौ । "ललाटे चोर्वोर्बिंदुमाला ।" इति कामसूत्रं, "तत्राप्यू-र्वोस्तिलपंक्तिरिव स्थिता स्यात् ।" इति जयमंगला ॥ 'तद्गण्डकाख्यं' इत्यत्र 'तत्खण्ड-काभ्रं' इति पाठः कामसूत्राद्यनुसारी भवेत् । अस्य रतिरहस्यस्थलक्षणस्य ( ९।४ ) व्या-ख्यायां "विषमैर्निम्नोन्नतैः कूटैः शृंगैः शिखरैरिति यावत्" इति वदन् कांचीनाथः स्खलितः । विषमैः पृथुमध्यसूक्ष्मैः असमस्थितैरिति यावत् दशनपदैः, कूटैः राशिभिः समूहैः दशनच्छेद्यानां इत्यर्थः । वृत्तं मंडलाकृति । इदं "कण्ठोपग्रहेण निष्पाद्यं" इति जयमंगला, स्त्रियः स्तनपृष्ठे पुरुषस्य च वक्षसि इत्यपि तत्रैव । बिंदुमालाया अल्पोऽस्य भेदः ॥ ३ ॥

विषमैः कठिनैः, कूटैः निर्दयैः, गले कपोले हृदये वृत्तस्तने मणिबिन्दुमाला लिखन्ति, नागरकाः तत् गण्डकाख्यं वदन्ति ॥ ३ ॥

घनाः सुदीर्घा रदनाङ्कराजयो
विभिन्नसद्विभ्रमलोहितान्तराः।
विमण्डना एव कृताः पयोधरे
लिखन्ति यत्नेन वरा वरार्चितम् (वराहचर्वितं ?) ॥ ४ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे-दशनपदान्यष्ट–
नाम त्रयोविंशतिः(°विंशः) परिच्छेदः ॥ ]

पयोधरे, वराः श्रेष्ठनराः, वरार्चितं यथा स्यात् तथा, यत्नेन, लिखन्ति, रदनाङ्कराजयः दन्तक्षतपंक्तयः, विमण्डना एव कृताः अलंकरणं कृतमित्यर्थः, किंभूताः रदनाङ्कराजयः ? घना निबिडाः, सुदीर्घाः, विभिन्नाः सद्विभ्रमाः उत्तमप्रवालाः तद्वत् लोहितान्तराः ॥ ४ ॥ इति दशनपदानि अष्ट ॥ ८ ॥

---

टि०—अत्र अंते 'वरावरार्चितम् इति पाठः अक्षरसंभ्रमोत्थः, '**वराहचर्वितम्**' इत्येव पाठो युक्तः। कोलचर्वितमित्यपीदं व्यवहृतम्। 'कोलवक्त्रम्' इति अनंगरंगे (९।३५) संज्ञितम् ॥ घनाः सान्द्राः। लोहितान्तराः ताम्रान्तरालाः ताम्रवर्णमध्याः। विमण्डनाः विशेषेण आभरणीभूताः। 'वरा वरार्चितम्' इति यथास्थितपाठे तु–वराः श्रेष्ठाः वराभिः सुंदरीभिः अर्चितं पूजितं बहुमतं यथा स्यात्तथा इत्यर्थः। एतत्पाठस्वीकारे श्लोके संज्ञाभावरूपा क्षतिरित्यनादरणीयोऽयं पाठः। पयोधरे एव इत्यन्वयः। अस्य विधिः सुष्ठु आविष्कृतो जयमंगलायां– "स्तनपृष्ठस्यैकतो भागात्स्वल्पदेशां त्वचं दशनसंदंशेन चर्वयेत् यावदपरं भागं इत्यनेन क्रमेणोपर्युपरिचर्वणान्निरंतराः प्रदीर्घा बह्वयश्चतस्रः षड्वा दशनपदपंक्तयो निष्पाद्याः। तासां चान्तरालानि संमूर्छितरक्तत्वात्ताम्राणि भवंति। अतो वराहस्येव चर्वणाद्वराहचर्वितकम्। स्तनपृष्ठ एव बहुलमांसत्वात् ॥" इति ॥ ४ ॥ अत्रेमे विशेषाः–" बिन्दोः प्रतिक्रिया माला, मालायाश्चाभ्रखण्डकम्। इति क्रोधादिवाविष्टा कलहान्प्रतियोजयेत् ॥" (२।५।३८) इति कामसूत्रे। (इदं सर्वं प्रीतिकलहे।) अपि च प्रत्यग्रं दशनच्छेद्यं दृष्ट्वाऽन्याः सोपहासा भवंति, तां च सुभगां मन्यंते इति लोकप्रसिद्धम्। अत्र खंडाभ्रकं वराहचर्वितकं च चण्डवेगयोः। सर्वाणि दशनच्छेद्यानि सांप्रयोगिकानि, न त्वभियोगे प्रयोज्यानि, हिंकारसीत्कारादिजननकालं यावच्च इत्यपि केचन। एतेषां सर्वेषां नायिकाऽपि नायकशरीरे प्रयोक्त्री। इति ॥ दन्तानां गुणदोषा अन्यतो ज्ञेयाः ॥ इति त्रयोविंशः ॥ (॥ २३ ॥)

प्रियं मृगाक्षी सरलाङ्गयष्टि-
निवेष्टयन्ती लतिकेव शालम् ।
विचुम्बार्थं नमयेत्तदीयम्
मुखं लतावेष्टितकं तदाहुः ॥ १ ॥

सरलाङ्गयष्टिर्मृगाक्षी, प्रियं निवेष्टयन्ती, विचुम्बनार्थं चुम्बनाय, तदीयं स्वामिनो मुखं, नमयेत्, तत् लतावेष्टितकं आहुः ॥ १ ॥

आक्रम्य पादमबला चरणेन पत्यु-
रूरुं तथाऽपरपदेन समञ्चयन्ती ।
तत्पृष्ठसङ्गतभुजाऽन्यतरेण दोष्णा
तं संमुखं सरभसं स्फुटमुन्नयन्ती ॥ २ ॥

अबला स्त्री, पत्युः पुरुषस्य पादं आक्रम्य, ऊरुं अपरेण पादेन समञ्चयन्ती, दोष्णः तत्पृष्ठसंगभुजाऽन्यतरेण सरभसं स्फुटं अंचयन्ती चुम्बन्ती, तत्संमुखं आहुः; पूर्वेणान्वयः ॥ २ ॥

किञ्चिच्च खिन्नरुदितेच्छति चुम्बनार्ता
प्राणेश्वरं यदिह वृक्षमिवाधिरोढुम् ।
वृक्षाधिरूढमुपगूहनमेतदुक्त-
माश्लेषयुग्ममुदितं स्थितकान्तमेत्य ॥ ३ ॥

किञ्चित् खिन्नरुदिता चुम्बनार्ता यदि प्राणेश्वरं वृक्षमिव अधिरोढुं इच्छति, वृक्षाधिरूढं उपगूहनं आलिङ्गनं, एतदाहुः । स्थितं कान्तं एत्य प्राप्य यदुपगूहनं आश्लेषयुग्मं आहुः ॥ ३ ॥

---

पा०—दोष्णः ( स. पु. ) । तत्संमुखं…स्फुटमञ्चयन्ती ( स. पु. ) ॥ २ ॥

---

टि०—अस्मिन्परिच्छेदे सर्वांगस्पर्शवत्त्वात्कामिभिरत्यन्ताभ्यर्हितमालिंगनं सभेद-माह ॥ शालः वृक्षः, "शालो मत्स्यान्तरे वृक्षसामान्ये हालभूभृति ।" इति विश्वलोचने । 'सालः इति पाठे 'साग' इति भाषायां प्रसिद्ध उन्नतो वृक्षः ॥ लतावेष्टितकं 'वल्लरीवेष्टितं' इत्यपि ( अ. रं., पं.सा.)ख्यातम् ॥ १ ॥ समंचयन्ती आक्रमन्ती, येन जघनघटनं स्यात् । उन्नयन्ती आत्मानमुच्चैः कुर्वती ॥ अत्र भ्रमेण टीकाकृता संमुखं इति आलिंगनभेदः गृहीतः । वस्तु-तस्तु अस्य उत्तरश्लोकेनान्वयः, युग्मेन च वृक्षाधिरूढमेव वर्णितम् ॥ २ ॥ खिन्नरुदितेति पदं कामसूत्रीयमंदसीत्कृतकूजितेतिपदेन तुल्यम् । चुंबनार्ता इत्यत्र 'चुंबनार्थं' इति रतिरहस्ये । (चुंबनं कर्तुं इति तदर्थः ।) स्थितकान्तं उर्ध्वस्थितं प्रियम् ॥ ३ ॥

संस्पर्शपूर्वमबलापरिरम्भणं यत्
तत् स्पृष्टकं मुनिजनैः कथितं पुराणैः ॥
कुड्याश्रयेषु परिपीडनमङ्गनायाः
कुर्यात् पतिर्यदिह पीडितमेतदाहुः ॥ ४ ॥

संस्पर्शपूर्वं अबलापरिरम्भणं आलिङ्गनं पुराणैः मुनिजनैः तत् पृष्ठ(ष्ट)कं कथितम् । पतिः स्वामी । कुड्याश्रयेषु गृहाश्रयेषु, अंगनायाः स्त्रियः, परिपीडनं एतत्पीडितं आहुः ॥ ४ ॥

तल्पे वितन्वदवगूहनकेलिमुच्चै-
र्यन्निस्तरङ्गमिथुनं घटयेत रागात् ।
रागातिरक्तपरिवर्धितगौरवेण
तत्कीर्त्तितं मुनिवरैस्तिलतण्डुलाख्यम् ॥ ५ ॥

तल्पे शय्यायां, तरङ्गरहितमिथुनं, अवगूहनकेलिं आलिङ्गनकेलिं, उच्चैः वितन्वत्, रागात् अनुरागात्, घटयेत, केन ? रागातिरक्तपरिवर्द्धितगौरवेण तत्तिलतण्डुलाख्यं मुनिजनैः कीर्तितम् ॥ ५ ॥

अङ्के स्थिताऽथ शयने मृगशावकाक्षी
गात्रेऽपि(°त्रे प्रि?)यस्य विस(श?)ती वनिताऽनुरागात् ।
गाढोपगूहनवशेन निरन्तरं यत्
संश्लेषमाहुरिह येन(दुग्ध?)जलाभिधानम् ॥ ६ ॥

---

**पा०—पृष्ठकं** ( बी; स. पु. ) । पतिस्तु परिपीडित० ( बी ) ॥ ४ ॥ अस्य श्लोकस्य पूर्वार्धं "रदैरनेकै" इत्यादि ( २३।३ ) श्लोकेन सह टीकाकृन्मूलपुस्तके लेखकप्रमादात् संयोजितं भाति, तथैव टीकाकृता च व्याख्यातम् । अत्र सर्वं समीकृत्य पाठः स्थापितः ॥

---

**टि०**— संस्पर्शः मिषतः परगात्रेण स्वगात्रघटनं, तत् पूर्वं आदौ यस्मिन् तत् संस्पर्शपूर्वम् ॥ स्वस्य कुड्यस्य भित्तिकायाश्च मध्ये स्त्रियः यत् प्रियेण स्वगात्रेण पीडनं तत् पीडितकं इति भावः ॥ स्पृष्टकं पीडितं च असंघटितयुवयोः प्रीतिलिंगद्योतनार्थं विज्ञेयम् ॥ ४ ॥ निस्तरंगं निश्चलम् । इदं बाह्वोरूर्वोश्च अतिसंघटनेन परस्परसंगमविशेष इव निष्पन्नं भवति ॥ ५ ॥ इदं क्षीरनीराख्यं दुग्धनीराख्यं ( अ. र. ९।९ ) वा उद्भटरागयोर्निष्पद्यते ॥ अंके

वनिता अनुरागात् यस्य पुरुषस्य गात्रे विस( श ? )तीवं मृगशावकाक्षी शयने अङ्के स्थिता, गाढोपगूहनवशेन दृढालिंगनवशाने, निरन्तरं यत् संश्लेषं आलिंगनं, इह येन कारणेन जलाभिधानं गदितम् ॥ ६ ॥

आक्रम्य यत्र जघनं जघनस्थलेन
संलंघयेत् प्रियतमा पतिमानताङ्गी।
व्यक्तीभवन्नखपदा गलितोत्तरीया
तज्ज्ञैस्तदेव कथितं जघनोपगूहम् ॥ ७ ॥

प्रियतमा स्त्री, पतिं जघनस्थलेन जघनं आक्रम्य संलङ्घयेत्, तज्ज्ञैः पण्डितैः, तदेव जघनोपगूहनं कथितम्। प्रियतमा कथंभूता ? आनताङ्गी, प्रकटी(टि)तनख-चिह्ना, गलितोत्तरीया विगलितउत्तरीयवस्त्रा ॥ ७ ॥

दध्यादुरःस्थितभरं कुचयुग्ममुच्चै-
स्तन्व्यास्तदा प्रकथयन्ति कुचोपगूढम् ॥
ऊरूपगूढमपि कीर्तितमङ्गनोर्वोः
पीडां यदोरुयुगलेन करोति कान्तः ॥ ८ ॥

उरःस्थितभरं कुचयुग्मं स्तनयुगलं यदा दध्यात्, तदा कुचोपगूढं कथयन्ति। कान्तः यदा ऊरुयुगलेन अङ्गनोर्वोः पीडां करोति तदा ऊरूपगूढं कीर्तितम् ॥ ८ ॥

---

उत्संगे–"नायकोत्संगे बहिरूरू विन्यस्याभिमुखमुपविष्टायां सत्यां,...शयने वेति पार्श्व-सुप्तयोरित्यर्थः।" इति जयमंगलायाम्। शयने तल्पे, तत्र पार्श्वशयनेन उपरिशयनेन वेदं निर्वर्त्यते। विशती बाहुपदयंत्रेण अतिपीडनात् प्रियदेहं प्रविशतीव। "मिथः प्रवेशं कुरुतो निजाङ्गैः।" (९१९) इति अनंगरंगे ॥ ६ ॥

टि०—संलंघयेत् नायकस्योपरि तिष्ठेदिति जयमंगलाकारः। इदं स्त्रिया पार्श्वशय-नेन क्रियते, विपुलजघना सैव प्रयोक्त्री, "नखदशनग्रहणनचुंबनप्रयोजनाय" (काम-सूत्रे।) ॥ अस्य 'जाघनं' इति संज्ञा अनंगरंगे (९१६) ॥ ७ ॥ इदं कुचोपगूढं 'स्तनालिंगनं' "आसने, पार्श्वशयने वा (स्त्रिया) पृष्ठभागं निम्नीकृत्य" (ज. मं) निर्वर्त्यते। "एवं हि नायकः स्तनभाराक्रान्ते पिंडीकृतमिवोरसि स्पर्शसुखमनुभवति।" इति जयमंग-लाकारः ॥ ८ ॥

वक्रीकृतास्येन गले कपोले
कुचे च तद्वै कृतकं तदाऽऽहुः ॥
सम्यङ्नतीकृत्य कपोलयुग्मं
सर्वाङ्गदेशे नतगण्डमेतत् ॥ ४ ॥

वक्रीकृतास्येन वक्रकृतमुखेन गले कपोले कुचे च यच्चुम्बनं तत् कृतकं आहुः ॥ कपोलयुग्मं सम्यक् नतीकृत्य नम्रीकृत्य सर्वप्रदेशे चुम्बनं एतत् नतगण्डं आहुः ॥ ४ ॥

एतानि निःशब्दविचुम्बनानि मया यथास्थानमुदीरितानि ।
अथाभिधास्ये मधुरस्वनानि मुखाधिवासानि विचुम्बनानि ॥ ५ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे–निःशब्दचुम्बनानि सप्त–
पञ्चविंशतिः (विंशः) परिच्छेदः ॥ ]

एतानि निःशब्दचुंबनानि, मया, यथास्थानं स्थानमनतिक्रम्य, उदीरितानि कथितानि। अथ अनन्तरं, मुखाधिवासानि विचुम्बनानि मधुरस्वनानि, अहं अभिधास्ये कथयिष्ये ॥ निःशब्दचुम्बनानि सप्त ॥ ७ ॥

---

पा०—कुचे च यद्वा कृतकं (स. पु.)। गवेशेन च गण्ड० (बी) ( अक्षरभ्रमजः पाठः )। ( पञ्चमः बी. पुस्तके नास्ति ) ॥ ५ ॥

---

टि०—वक्रीकृतास्येन कुटिलीकृतेन मुखेन ॥ नतीकृत्य नीचैः कृत्वा । कपोलयुग्मं गण्डद्वयं मुखमिति यावत्, स्वस्य इति शेषः ॥ ४ ॥ अथ समनंतरपरिच्छेदद्वये इति भावः । मुखाधिवासानि मुखस्थानीयानि, सप्तांगे मुखे जिह्वातालुप्रदेशे अधरोष्ठे च प्रयोज्यानि । अतः विचुंबनानि विशिष्टानि चुंबनानि ॥ ५ ॥ कामसूत्रेषु, निमितकादीनि त्रीणि कन्याचुंबनानि, समादीनि पंचधा अधरग्रहणचुंबनानि, एकं उत्तरोष्ठचुंबनं, ओष्ठद्वयं व्याप्नुवत् संपुटकं एकं, अंतर्मुखचुंबनादीनि चत्वारि जिह्वाघट्टनरूपाणि, अवस्थाविशेषानधिकृत्य रागदीपनादीनि त्रीणि, विलासरूपे छायिकादिनी द्वे, मानदर्शके हस्तांगुलिपादांगुलिचुंबने द्वे, भावपरीक्षकं ऊरुचुंबनमेकं, समादीनि पूर्वं ( २५।१। टि. ) उक्तानि चत्वारि इति संहृत्य षड्विंशतिप्रकाराणि उक्तानि, तेभ्यः विलक्षणानि अत्रोक्तानि सप्त विज्ञेयानि ॥ प्रशस्तचुंबनवर्णने एकं सुभाषितं सूक्तितरंगिण्याम्–"एकेन हस्तेन कुचौ गृहीत्वा, सव्येन कंदर्पगृहं विचिन्वन् । कान्ताकरालंबितकामदण्डः कांतामुखं चुंबति यः स धन्यः ॥" इति ॥ इति पंचविंशः ॥ ( ॥ २५ ॥ )

सूक्ष्मीकृताग्रा रसना मुखान्तः
प्रवेशिता तां प्रवदन्ति सूचीम् ॥
वितन्यमाना प्रतता मता सा,
प्रकम्पमाना यदि वा करी स्यात् ॥ १ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे–जिह्वाप्रवेशाः त्रयः–
षड्विंशतिः (षड्विंशः) परिच्छेदः ॥ ]

स्त्रीमुखान्तः, सूक्ष्मीकृताग्रा रसना जिह्वा, प्रवेशिता, तां सूचीं प्रवदन्ति ॥ सा जिह्वा, वितन्यमाना प्रस्तारिता, प्रतता मता ॥ प्रकम्पमाना इतस्ततः चारिता यदि, वाकली स्यात् ॥ जिह्वाप्रवेशाः त्रयः ॥ १ ॥

---

जिह्वाग्रमात्रस्य विचूषणं य-
त्तदुच्यतामोष्ठविमृष्टसंज्ञम् ॥
विचूष्यते शीघ्रतरं यदेत-
त्तच्चूषणं चुम्बितकं वदन्ति ॥ १ ॥

जिह्वाग्रमात्रस्य, यद्विचूषणं लेहनं, तत् ओष्ठविमृष्टसंज्ञं उच्यताम् ॥ यदेतच्चूषणं शीघ्रतरं विचूष्यते, तच्चूषणं विचुम्बितं वदन्ति ॥ १ ॥

यदत्र दष्ट्वाऽधरचूषणं परै-
र्मनीषिभिः कीर्तितमार्द्रचुम्बितम् ॥
परस्परं स्त्रीपुरुषौ विचूषतो
वदन्ति तत्संपुटकं विलासिनः ॥ २ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे–चूषणानि चत्वारि–
सप्तविंशतिः (॰विंशः) परिच्छेदः ॥ ]

---

**पा०**—सूक्ष्मी॰॰॰ग्रां॰॰॰नां॰॰॰शितां (बी)। **वाकली** ( स. पु. ) ॥ १ ॥
**पा०**—॰ग्रमारभ्य विचुंबनं यत्त० (बी) ॥१॥ ॰धरचुम्बनं (बी) ॥२॥ (२७॥ परि०)

---

**टि०**—अन्यत्रानुक्ता नायककर्तृका जिह्वाप्रवेशा अत्रोक्ताः ॥ रसना जिह्वा। मुखान्तः नायिकाया इति शेषः ॥ वितन्यमाना प्रस्तार्यमाणा ॥ करी इति हस्तिकरवत् कंपमानत्वात् तथा संज्ञा कृता स्यात् ॥ १ ॥ इति षड्विंशः ॥ ( ॥ २६ ॥ )

**टि०**—अस्मिन् परिच्छेदे उक्तानां चूषणानां ओष्ठकर्मनिर्वृत्तत्वात् विचुंबनत्वं ज्ञेयम् ॥ अन्यत्रानुक्तानीमानि ॥ १ ॥ दष्ट्वा अधरोष्ठं दन्तेन खंडयित्वा ॥ जिह्वाग्रेण सह तद्विना वा

वक्त्रे मुखं नयनयोर्नयनैर्नि(ने नि?)युज्य
क्रीडासुखानि(न्वि?)तरसोन्मनसः प्रियायाः ।
हन्याल्ललाटफलकेन ललाटमध्यम्
लालाटिकं तदुपगूहनमामनन्ति ॥ ९ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे—आलिङ्गनानि दश—
नाम चतुर्विंशतिः(°र्विंशः)परिच्छेदः ॥ ]

प्रियायाः वक्त्रे मुखे मुखं नियुज्य, नयनयोर्नयनैर्नियुज्य, प्रियायाः ललाटमध्यं ललाटफलकेन हन्यात्, तदालिङ्गनं लालाटिकं आमनन्ति ॥ इत्यालिङ्गनानि दश॥ १०॥

---

संचोदनार्थं मदनाङ्किकानां
निपीड्य वक्षःस्तननाभिमीषत् ।
यच्चुम्ब्यते नागरकैर्मुनीन्द्रा
निपीडितं चुम्बनमेतदाहुः ॥ १ ॥

---

टि०—अस्य 'ललाटिका' इति संज्ञा कामसूत्रे। इदं उत्तानसंपुटे पार्श्वसंपुटे वा प्रयोज्यं, तच्च एतद्ग्रंथकर्तुरभिप्राये नायकेन, जयमंगलाकाराभिप्राये नायिकयैव ॥ ९ ॥ अन्यत्र पक्षिजातिकृत्यमनुसृत्य हंसपारावताद्यालिंगनान्युक्तानि, आमोदादिनिमित्तान्यधिकृत्य आमोदादीनि सप्त, एवं भयालिंगनं स्त्रीप्रयुक्तमप्येकम्। तत्र कामसूत्रादिषूक्तं 'विद्धकं' यथा—"यद्गृह्णती किंचन वंचिताक्षं स्थितोपविष्टं पुरुषं स्तनाभ्याम्। नितंबिनी विध्यति, तां च गाढं गृह्णात्यसौ विद्धकमुच्यते तत् ॥" (६।२) इति रतिरहस्ये। क्रीडालिंगनभेदः इदम् ॥ एतेषु लतावेष्टितकं वृक्षाधिरूढं चेति द्वयं ऊर्ध्वस्थितयोः, प्रियचुंबनार्थं स्त्रीप्रयुक्तमेव। स्पृष्टकं पीडितं च चलतोः प्रायः एकजन्यं रागप्रत्यायनार्थमेव। तिलतण्डुलं क्षीरनीरकं च पार्श्वसुप्तयोः रागान्धयोः उभयप्रयोज्ये; एतदुभयं रागकाले नाम यत्र पुंसः स्तब्धलिंगता स्त्रियाश्च क्लिन्नसंबाधता तत्र यंत्रसंयोगात्प्राक् प्रयुज्यमानं भवति, सुरतारंभे सुरतान्ते व युक्तयंत्रे तु कचित्तदनुकूलबंधेषु जायते। कुचोपगूढं जघनोपगूढं ऊरूपगूढं चेति त्रयं "अतिपीडनं हि मांसस्थानेऽत्यंतसुखकारि स्यात्।" (ज.मं.) इति प्रयोज्यं पार्श्वशयने यथायोग्यं स्त्रिया उभयेन वा। लालाटिकं च उत्तानसंपुटे पार्श्वसंपुटे वा उभयोः केनाप्येकेन रसातिरेके क्रीडार्थं प्रयोज्यं; अपि च मुखालिंगनस्य अयमेव एकः प्रकारः शास्त्रैकगम्यः इति निष्कर्षः॥ इति चतुर्विंशः ॥ (॥ २४ ॥)

टि०—अस्मिन्परिच्छेदे अन्यत्रानुक्तानि निःशब्दचुंबनानि अन्वर्थनामानि नायकेनैव प्रयोज्यान्याह। कामसूत्रादिषु प्रायः नायिकया प्रयोज्यानि अधरचुंबनानि उक्तानि।

मदनाडिकानां संचोदनार्थं संचारणार्थं, वक्षःस्तननाभिं ईषत् निपीड्य, नागरकैः यच्चुम्ब्यते, तत् मुनीन्द्रा निपीडितं चुम्बनमाहुः ॥ १ ॥

**भ्रान्तेन वक्त्रेण ललाटदन्त-**
**च्छदेषु तद्भ्रामितनामधेयम् ॥**
**उन्नामितोष्ठेन मुखेन नेत्रे**
**गण्डे तथोन्नामितकं प्रसिद्धम् ॥ २ ॥**

ललाटदन्तच्छदेषु ललाटोष्ठेषु, भ्रामितेन वक्त्रेण चुम्बनं, तत् भ्रामितनामधेयम् ॥ उर्द्ध्वं नामितेन ओष्ठेन मुखेन, नेत्रे गण्डे च, तदा उन्नामितकं प्रसिद्धम् ॥ २ ॥

**नाभौ कपोले स्फुरिताधरेण**
**पयोधरे वा स्फुरितं प्रदिष्टम् ॥**
**तथोदितं हृज्जघनोरुदेशे**
**श्लिष्टाधरौष्ठेन च संहतोष्ठम् ॥ ३ ॥**

नाभौ कपोले स्फुरिताधरेण, पयोधरे कुचे, स्फुरितं चुम्बनं प्रदिष्टं कथितम् ॥ तथा तेनैव प्रकारेण जघनोरुदेशे श्लिष्टाधरोष्ठेन विरलाधरोष्ठेन चुम्बनं संहतोष्ठं प्रदिष्टम् ॥ ३ ॥

---

**पा०**—तदोन्नामितकं ( टी. पा. ) ॥ २ ॥ कपाले ( टी. पा. ) ॥ ३ ॥

---

अत्र तु अधरादीनि सर्वाण्युचितस्थानानि । कामसूत्रेषु च अधरादपरेषु अंगेषु निर्वर्त्यानि पीडनतारतम्यमालंब्य समं पीडितं अंचितं मृदु चेति चतुर्धा विभक्तानि, तत्र स्थानभेदमाह जयमंगलाकारः– " ऊरुसंधि-कक्षा-वक्षःसु समं, ( न पीडितं नातिमृदु ); कपोलकक्षामूल-नाभिमूलेषु पीडितं; ललाटचिबुकयोः कक्षापर्यंते अंचितं ( 'आकृष्टं' ); ललाटे नयनयोः मृदु ("'स्पर्शमात्रकरणम् ।)" इति ॥ चुंबनं च " अधरद्वितयस्पर्शश्चुंबनं परिकीर्तितम् ।" ( शृं. दी. २।६१ ) ॥ निपीड्येति । यतः वक्षसि स्तनयोः नाभौ च मदनाडिकानामपरान्ता वर्तन्ते ॥ १ ॥

**टि०**—भ्रामितं भ्रान्तं वा, इदमेव नायिकाप्रयुक्तं 'चलितकं' इति संज्ञितं कामसूत्रादौ, तल्लक्षणं च तत्र–" प्रमत्तस्य विवदमानस्य वाऽन्यतोऽभिमुखस्य, सुप्ताभिमुखस्य वा निद्राव्याघातार्थं, चलितकम् ।" इति ॥ वक्त्रं नायिकायाः ॥ उन्नामितौ प्रयत्नेन उच्चैः कृतौ ओष्ठौ यत्र, तादृशेन मुखेन, नायकस्य इति शेषः । गंडे कपोले ॥ २ ॥ स्फुरिताधरेण ईषत्कम्पिताधरेण, मुखेन इत्यध्याहर्तव्यम् । एवमन्यत्रापि ॥ श्लिष्टाधरौष्ठेन संहतोष्ठेन ॥ ३ ॥

परैर्मनीषिभिः उत्तमपण्डितैः, यदत्र अधरचूषणं दृष्ट्वा, आर्द्रचुम्बितं कीर्तितम् ॥ परस्परं स्त्रीपुरुषौ विचूषतः, विलासिनः तत्संपुटकं वदन्ति ॥ चूषणानि चत्वारि ॥४॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां चुम्बनप्रकाशो नाम षोडशः परिच्छेदः ॥

---

* *

* वामोरुसंस्थापितदक्षिणोरु-
नारी यदा स्वस्तिकमाह धीरः ॥ २ ॥

····नारी यदा वामोरुसंस्थापितदक्षिणोरू(रुः) तदा धीरः स्वस्तिकं आह ॥२॥

यदोरुमूलोपरि योषिदूरू
वदन्ति माण्डूकमिदं मुनीन्द्राः ॥ ( २½ ॥ )

पुरुषस्य ऊरुमूलोपरि, योषित् स्त्री तस्याः ऊरू, मुनीन्द्राः तदा माण्डुकं वदन्ति ॥ ( २½ ) ॥

कौर्मं यदोत्तानरतौ प्रयत्ना-
दुभौ भवेतां सरलीकृताङ्गौ ॥ ३ ॥

---

पा०— * अत्र पुस्तकद्वयेऽपि उत्तानकरणेषु करणद्वयवर्णनपरः सार्धश्लोकः प्रभ्रष्टो लक्ष्यते, तत्पूरणं च ३३ परिच्छेदगतेन आदितः सार्धश्लोकेन जातं दृश्यते, तदिदं प्रथमादर्शग्रन्थलेखकप्रमादाद्भूतं इति संभाव्यते ॥ अपि च बी. पुस्तके द्वितीयाङ्केन चिह्नितश्लोकस्य उत्तरार्धं, स. पुस्तके उत्तरश्लोकस्य पूर्वार्धेन गृहीत्वा तद्रीत्या अपरश्लोकानां विभागं कृत्वा व्याख्यानं प्रवर्तितं इति ज्ञेयम् ॥ दक्षिणोरू (स. प.) । वीरः ( स. पु. ) ॥ २ ॥ माण्डूकपदं ( बी ) ॥ २½ ॥ कौर्मं यदोर्ध्वाधरतप्रयत्नावु० ( स.पु. ) । सरलीकृतांसौ ( बी ) ॥३॥

---

विचूषतः अधरोष्ठं इति शेषः, तत्संपुटकम् । तत्राद्यं कामसूत्रे 'अवलीढपीडितं' इति शब्दितम् । इदं संपुटकाख्यं चूषणं 'अधरपानं' इति प्रसिद्धम् ॥ २ ॥ इति सप्तविंशः ॥ (॥ २७ ॥)

टि०—एवं सप्तभिः परिच्छेदैर्बाह्यरतमुक्त्वा इतः परं पञ्चभिः परिच्छेदैः आभ्यंतरसुरते प्रयोज्यान् नानाविधान् करणाख्यान् लयाह्वान् बन्धाख्यान् वा स्मरयंत्रविधीन् आह ॥ ······ ।अस्य स्वस्तिकबंधस्य लक्षणं दीनालापनिकाशुकसप्तत्यां यथा– "तदूरुनिक्षिप्तगुल्फो गाढालिंगनमाचरन् । आसीनाया रतिं याति स्वस्तिकं परिकीर्तितम् ॥" (२३।३०) इति ॥ २ ॥ मांडूकस्य लक्षणमन्यत्र नोपलभ्यते ॥ २½ ॥ कौर्मं 'कूर्मबंधः ।' अंसौ इति पाठे तौ शेषावयवानामुपलक्षणम् । तथा च रतिरहस्ये ( १०।२८)–"भुजयोर्भुजमान-

यदा उभौ स्त्रीपुरुषौ, ऊर्ध्वाधरतप्रयत्नौ ऊर्ध्वअधसुरतप्रयत्नौ, सरलीकृताङ्गौ समानाङ्गौ ॥ ३ ॥

पादौ स्थितावात्महनुप्रदेशे
नार्या यदा तद्धनुपादसंज्ञम् ॥ ३½ ॥

नार्या आत्महनुप्रदेशे कपोलात् अधःस्थाने, पादौ स्थितौ, तत् हनुपादसंज्ञं भवति ॥ ३½ ॥

आवद्धपर्यङ्कपदप्रियायाः
कण्ठं पतिर्बन्धुरयेद्भुजाभ्याम् ।
तज्जानुजङ्घान्तरनिःसृताभ्यां
पद्मासनं तत् करणं प्रदिष्टम् ॥ ४½ ॥

आबद्धः आस्थितः, पर्यंके क्रोडे, पदः यस्याः प्रियायाः; पतिः स्वामी, भुजाभ्यां बन्धुरयेत् वेष्टयेत्, कथंभूताभ्यां भुजाभ्यां ? तस्याः जानुः तज्जानुः, तज्जानुजङ्घान्तरयोः निःसृताभ्यां, तत् करणप्रवेशं पद्मासनं विदुः ॥ ४½ ॥

पर्यंकमेकेन पदा निबद्धं
तदर्धपद्मासनमुच्यते तु ॥ ५ ॥

---

**पा०**—हनोः प्रदेशे (बी) ॥ ३½ ॥ पदः प्रियायाः (बी)। कंठे (स.पु;बी)। **तत्करणप्रवेशम्** (स. पु. ) ॥ ४½ ॥

---

नमाननतो जंघामभि जंघमसौ रमते । विन्यस्य नरो यदि कौर्ममिदम् । ” इति । दी० शुकसप्तत्यां तु—“कान्ताकुचाग्रान्तनिविष्टपादः, तस्याः पदद्वंद्वकृतांसभागः । करौ गृहीत्वा स्वकरद्वयेन यभेत यत्तद्धनकूर्मबंधः ॥” (२३।३६ ) इति । अनंगरंगे ( १०।२२ ) इदं उपविष्टबंधेषु उक्तम् ॥ ३ ॥

**टि०**—हनुपादं-अन्यत्र न प्रोक्तम् ॥ ३½ ॥ आबद्धेत्यादि । पर्यंकः वामजंघाया दक्षिणजंघाया उपरि दक्षिणजंघायाश्च वामजंघाया उपरि स्थापनेन जायते । बंधुरयेत् दृढीकुर्यात् । “उत्ताना नायिका दक्षिणपादं वामे स्वोरुमूले निदध्यात् वामं च दक्षिणे, पद्मासनमिति प्रतीतम् ।” इति जयमंगलाकारः । “स्ववामपादं निजदक्षिणोरावदक्षिणोरावपि दक्षपादम् । न्यस्योर्ध्वगं तद्रमते गृहीत्वा प्रियश्च पद्मासनमुक्तमेतत् ॥” ( १६।१२ ) इति रतिरत्नप्रदीपिकायाम् । अनंगरंगपंचसायकयोः इदं उपविष्टबंधेषूपदिष्टं, तच्च पंचसायके—“पद्मासनं संपरिकल्प्य भर्ता क्रोडोपविष्टां युवतीं रमेत । अन्योन्यकंठार्पितबाहुबन्धात् पद्मासनाख्यं प्रवदन्ति सन्तः ॥” इति वर्णितम् । अनेन पद्मिनीं रमयेत्, तदुक्तं—“पंकजासनलयेन पद्मिनीम् ।” ( र. र. ११२१ ) इति ॥ ४½ ॥ पर्यंकं अंकं उत्संगं ऊरुमूलमिति यावत्

एकेन पदा, पर्यङ्कं क्रोडं, निबद्धं आरोपितं, तदा अर्धपद्मासनम् ॥ ५ ॥

यदाऽङ्गना पादयुगं निदध्यात्
प्रियोरसि स्यादिह पिण्डिताख्यम् ॥ ५½ ॥
आरोप्यते तत्र यदैकपादं
तदा भवेत्पिण्डितमर्धपूर्वम् ॥ ६ ॥

यदा अङ्गना स्त्री, पादयुगं स्वपादयुगं, प्रियोरसि स्वामिवक्षःस्थले, निदध्यात् अर्पयेत्, तदा पिण्डिताख्यम् ॥ (५½) ॥

एकं पादं यदा स्वामिवक्षःस्थले आरोप्यते, तदा अर्धपूर्वं पिण्डितं अर्धपिण्डितं इत्यर्थः ॥ ६ ॥

संस्थापयेदूरुयुगं मृगाक्षी
पुंस्कन्धयोर्जृम्भितमुच्यते तत् ॥ ६½ ॥

मृगाक्षी पुंस्कन्धयोः ऊरुयुगं स्थापयेत् तदा जृंभितं उच्यते ॥ (६½) ॥

---

परि परिगतं व्याप्तं वा अंकं क्रोडं पर्यंकम्। अस्मिन् एक एव पादः अपरोर्वो स्थापितो भवति, अपरः प्रसृतः जानुवलितो वा। कामसूत्रे इदमनुक्तम्। अनंगरंगे (१०।१८) उपविष्टभेदेषूक्तम् ॥ ५ ॥

टि०—इदमेव कामसूत्रे 'उत्पीडितकं' इति, रतिरहस्ये (१०।२१) अनंगरंगे (१०।१४) च 'स्फुटनं' इति संज्ञितम्। उत्पीडितकव्याख्याने जयमंगलाकारः–"नायकोऽपि बाहुपाशेन नायिकाया ग्रीवामावेष्ट्योपसर्पेत्, एवं चरणावूर्ध्वं संकुचितावधस्तादुरसा धारितौ स्याताम्। द्वयोश्चोरसि पीडनादुत्पीडितकम् ॥" इति ॥५½॥ 'अर्धपिंडितं'–'अर्धनिपीडितं' (र. र. १०।२२) 'अर्धपीडितकं' (का. सू.) वा इति। इदं एकस्मिन् चरणे व्यत्यासेन प्रसारिते, अन्यस्मिंश्च नायकोरसि स्थिते जायते ॥ ६ ॥ जृंभितं–इदं कामसूत्रे 'जृंभितकं' इति, रतिरहस्ये (१०।२२) 'जृंभकं' इति, अनंगरंगे (१०।४) 'समपादं' इति च संज्ञितं, तथाहि–"वथ जानुयुगं युवतेः। स्कंधे यदि जृंभकमे०" इति। ऊरुयुगं इत्येव पाठश्चेत् लक्षणया चरणौ जानुसंधी वा इत्यर्थः। अस्मिन् करणे नायिकाचरणौ ऊर्ध्वौ भवतः नायकस्कंधयोर्विन्यासेन। यत्र तु तौ तिर्यक्कृतौ तत् रतिरहस्यानंगरंगयोरुक्तं जृंभितकं तु एतस्माद्भिन्नं, यथा–"यदि तिर्यगुदञ्चितमूरुयुगं दधती रमते रमणी रमणम्। विहितापसृतिर्विवृतोरुभगा भुवि जृंभितमुक्तमिदं करणम् ॥" (र. र. १०।१७) इति। (उदंचितं प्रसारितं विवृतं वा इति भावः।) इदमपरं मृग्याः उच्यते ॥ ६½ ॥

विन्यस्यते तत्र यदोरुरेको
नार्या तदा वेणुविदारणं स्यात् ॥ ७ ॥

नार्या स्त्रिया यदा तत्र पुरुषस्कन्धे एकः ऊरुः विन्यस्यते तदा वेणुविदारणं स्यात् ॥ ७ ॥

स्त्रियः स्वपार्श्वद्वितयार्पितोरो-
रिन्द्राण्यपि स्यात्प्रियजानुयोगात् ॥ ७½ ॥

स्वपार्श्वद्वितयार्पितोरोः—स्वस्य पार्श्वं स्वपार्श्वं, स्वपार्श्वद्वितये अर्पितः ऊरू(रु:?) यया, प्रियजानुयोगात् स्वामिजानुयोगात्, इन्द्राणी नाम स्यात् ॥ (७½) ॥

एका(स्कंधा?)श्रितं कुञ्चितमेकजानु
प्रसारितं चैकपदं तरुण्याः ॥ ८ ॥
यूना समापीडितकण्ठदेशं
संवेशनं सूच्यभिधानमग्र्यम् ॥ ८½ ॥

पुरुषस्य एकाश्रितं एकचरणं प्रसारितं, एकजानु कुञ्चितं, तरुण्याः एकपादं प्रसारितं, यूना समापीडितकण्ठदेशं, संवेशनं सुरतं, सूची—अभिधानं, अग्र्यं श्रेष्ठम् ॥ ८½ ॥

---

पा०—नार्या यदा(बी) ॥ ७ ॥ स्त्रिया ( बी ) ॥ ७½ ॥ मेकजानुं (स.पु.) ॥८॥ यूना समावेशित ( बी ) । सूच्यविधा० ( बी ) ॥ ८½ ॥

---

टि०— वेणुविदारणं 'वेणुदारितकं' 'वेणुविदारितं' वा । विन्यस्यते नायकस्यांशे इति शेषः । ऊरुः चरणः इति भावः । इदं करणं पुनःपुनः चरणयोर्व्यत्यासेन निर्वर्त्यते, यथोक्तं रतिरहस्ये (१०।२३)—"परिवर्तनतो बहुशः प्रथितं कथितं भुवि वेणुविदारितकम् ।" इति । अनेन शंखिनी रन्तव्या, तदुक्तं तत्रैव—"वेणुदारितपदेन शंखिनीम् ।" (१।२१) इति ॥ अत्रैव यदा चरणयोः परिवर्तनाभावेन नायिकायाः एकः पादः आसुरतान्तं नायकस्कंधे स्थापितः, अपरश्च भूतलस्थ एव भवति तदा प्रसारितं 'सारितं' नाम वा करणम् ॥ ७ ॥ स्वस्य प्रियस्य । पार्श्वयोः कक्षाबहिर्भागयोः । ऊरू जंघासंश्लिष्टौ । इंद्राणीति 'शचीप्रोक्तत्वादन्वर्थसंज्ञया व्यपदेशः' ( ज. मं. ), अभ्याससाध्यं चेदम् । उच्चरते मृग्याः, उच्चतररतेऽपि अस्य परिग्रहः। "संश्लिष्टजंघे नार्यूरू यथाकालं स्वपार्श्वयोः । कृत्वाऽभ्यासेन चेंद्राणी कक्षावस्थितजानुनी ॥" इति लक्षणं उदाहृतं र. र. टीकायाम् ॥ ७½ ॥ एकपदस्य लक्षणं स्मरदीपिकायां—"पादमेकं करे धृत्वा द्वितीयं स्कंधसंस्थितम् । गले धृत्वा रमेत्कामी बंधस्त्वेकपदः स्मृतः ॥" इति ॥ ८ ॥ सूचीकरणं—नास्य वर्णनमन्यत्र लभ्यते । संवेशनं आसनं सुरतबंधः ॥ ८½ ॥

आरोपितं पादयुगेन चोर्वो-
नार्या यदा नागरकं प्रशस्तम् ॥ ९ ॥
निपीडयेदूरुयुगेन मध्ये
कान्तस्तदा ग्राम्यमुदीरितं तत् ॥ ९½ ॥

नार्याः स्त्रियः, ऊर्वोर्मध्ये, पादयुगेन आरोपितं, नागरकं प्रशस्तं उत्तमम् ॥९॥ ऊरुयुगेन मध्ये कान्तः निपीडयेत्, तदा ग्राम्यं, उदीरितं कथितम् ॥ ९½ ॥

पादौ स्थितौ वल्लभनाभिदेशे
नार्या यदा कार्कटनामधेयम् ॥ १० ॥
वस्तौ कटीचोदनदोलितौ तौ
तदोच्यते प्रेङ्खणमग्रधीभिः ॥ १०½ ॥

वल्लभः पुरुषः तस्य, नाभिभागे, नार्याः पादौ स्थितौ, तदा कर्कटनामधेयम् ॥ १० ॥ तौ पादौ, वस्तौ नाभ्यधोभागे, "वस्तिर्नाभेरधो द्वयोः" इत्यमरः, कटीप्रेरणदोलितौ, अग्रधीभिः पण्डितैः, प्रेक्ष(ङ्ख)णमुच्यते ॥ १०½ ॥

---

पा०—चोर्वोर्यदा तदा ना०( बी ) ॥ ९ ॥ कर्कट (स.पु.;बी) ॥ १० ॥ प्रेक्षण० ( बी; स. पु. ) ॥ १०½ ॥

---

टि०—नागरकबंधे नार्या ऊरुयुगं पुरुषकटितो बहिर्याति। (र. र.)। इदं—"उत्तानितायाः स्मरमंदिरे यः स्थितस्तदूरुद्वयमुद्गृहीत्वा। संस्थाप्य बाह्यं कटितो रमेत कान्तस्तदा स्यात्किल नागरकाख्यः ॥" इति अनंगरंगे वर्णितम्। पंचसायके तु किंचिद्भेदेन—"एवंविधायाः स्त्रिय एव जंघे कान्तस्य जंघोपरि संनिवेश्य। उद्भ्राम्य भूयः कटिमारमंत्याः स्यादेष बंधः किल नागराख्यः ॥" ( एवंविधायाः उत्तानसुप्तायाः। ) ॥ ९ ॥ "उत्तानयोषित उत्संग उपविष्टनरस्य हि। बाह्योरू पार्श्वगौ स्यातां तद्ग्राम्यं करणं स्मृतम् ॥" इति रतिरत्नप्रदीपिकायाम् ॥ समरते इदं प्रयोज्यम् ॥ ९½ ॥ कार्कटके विशेषः रतिरत्नप्रदीपिकायां—"ऊरुभ्यां किंच कान्ताकटितटमवधृत्योपविष्टो रमेत, एतत्कौलीरकाख्यं करणमतिशयप्रौढिदं भोगकाले ॥" इति। अनंगरंगे इदं तिर्यग्बंधेषु संगृहीतम् ॥ १० ॥ प्रेंखणं प्रेङ्खा वा। नायकस्य कटिचालनेन तौ पादौ वस्तौ दोलितौ तदा इत्यन्वयः। कांचीनाथस्तु—"प्रमदा स्वपदावूर्ध्वीकृतौ तोरणाकारौ कृतौ प्रेंखोलयति चेत् प्रेंखाभं सत् प्रेंखाख्यं करणं भवति।" इति ( र. र. टीकायां १०।२४ ) व्याचख्यौ। स्फुटतया भेदेन च इदमुक्तं ( र. र. प्र. १६।११ )—"एतत्कौलीरकरणे पादाभ्यां नायकं वधूः। आन्दोलयति चेन्मन्दं प्रेंखं करणमुच्यते ॥" इति ॥ अनंगरंगे ( १०।१८ ) इदं उपविष्टबंधेषु उक्तम् ॥ १०½ ॥

आश्लिष्य वामेन भुजेन कान्तः
पयोधरे सव्यकरं विदध्यात् ।
नार्या नृजङ्घायुगसंयतांघ्रे-
र्बुधैस्तदा मार्कटकं तदुक्तम् ॥ ११½ ॥

नृजंघायुगे(न) संयतांघ्रेः पुरुषजङ्घाद्वयनियमितचरणायाः नार्याः, कान्तः, वामेन भुजेन, आश्लिष्य आलिंग्य, दक्षिणकरं कुचे विदध्यात्; तदा बुधैः पण्डितैः, तत् मार्कटिकं उक्तम् ॥ ११½ ॥

दधाति रामोरुयुगं कराभ्यां
कान्तस्तदोद्भुग्नकमुच्यते तत् ॥ १२ ॥
नीतं शिरश्चैकपदं तरुण्याः
प्रसारितं चापरमायताख्यम् ॥ १२½ ॥

कान्तः कराभ्यां रामोरुयुगं दधाति, तदा उद्भुग्नकं उच्यते ॥ १२ ॥
तरुण्याः एकपदं शिरो नीतं, अपरं पदं प्रसारितं तत् आयताख्यं उच्यते ॥ १२½ ॥

---

पा० —मार्कटिकं (स.पु;बी)। नयन्ति वामोरु···कान्तास्त···मिष्यते तत् । (बी) ॥ १२ ॥ नीवीं शि···प्रसारितं तत्प···ताक्षं ( बी ) (अक्षरसंभ्रमतः पाठः।) ॥ १२½ ॥

---

टि०—मार्कटमिति अनंगरंगे उपविष्टबंधेषु उक्तं, तथा च तत्र–" विलासिनी-कूर्परमध्यवर्ती कटिं स्वकीयां भ्रमयन्मुहुश्चेत् । भजेत भर्तेति वितर्दितं स्यात्, तन्मार्कटं संमुखसंगमेन ॥ " (१०।२४) इति ॥ ११½ ॥ उद्भुग्नकं ' भुग्नं ' ( र. र. १०।२१ ) वा । "विलासिनीसंहृतमूरुयुग्मं कृत्वोर्ध्वमालिंग्य भजेत भर्ता । उद्भुग्नकं स्यात् '' (१०।१४) इति अनंगरंगे ॥ इदं उच्चरते विशालस्मरमंदिराया हस्तिन्याः ॥ अत्रैव यदा नायकः नायिकाजानुसंधी स्वस्कंधयोर्विन्यस्य नायिकाचरणौ ऊर्ध्वं धारयेत्तदा जृंभितकम् । मार्कटके नरः जंघाभ्यां स्त्रीजंघे संयते करोति, अस्मिन् बंधे तु रामोरुयुगं कराभ्यां ऊर्ध्वं धारयति । कामसूत्राद्युक्तं उत्फुल्लकं उपोच्छीर्षकादिना स्त्रीत्रिकमुन्नम्य स्त्रीपार्ष्णिभ्यां नितंबाद्बहिः-स्थिताभ्यां जायते । अत्र आद्ये द्वे हस्तिन्याः, तृतीयं मृग्याः ॥ १२ ॥ आयतं करणमेव ' शूलाचितकं ' इति कामसूत्रे, ' शूलचितं ' इत्यन्यत्र, ' त्रैविक्रमं ' इति च अनंगरंगे ( १०।६ ) संज्ञितम् ॥ तरुण्याः एकपदं शिरः नीतं इत्यन्वयः । तच्च अकुटिलं ऊर्ध्वं च प्रसृतं भवति । शिरः नायकस्य ॥ १२½ ॥

कण्ठं निजं बन्धुरयेद्भुजाभ्यां
स्वजानुजङ्घान्तरनिःसृताभ्याम् ।
नितम्बिनी यत्र वदन्ति धीरा-
स्तन्नागपाशं करणप्रधानम् ॥ १३½ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे—उत्तानकरणं चतुर्विंशति-
सङ्ख्याकं—अष्टाविंशतिः (°विंशः) परिच्छेदः ॥ ]

नितम्बिनी, यत्र सुरते, भुजाभ्यां स्वजानुजंघान्तरनिःसृताभ्यां निजं कण्ठं बन्धुरयेत्, धीराः पण्डिताः, तत् करणप्रधानं नागपाशं वदन्ति ॥ ( १३½ ) ॥

इत्युत्था( त्ता )नस्थितकरणानि चतुर्विंशतिः ॥ २४ ॥

---

द्वयोस्तिरश्चोः सरलीकृताङ्ग्योः-
र्विघट्टनं संपुटकं तदुक्तम् ॥
यदोरुयुग्मेन निपीडयेत्पतिं
प्रिया तदा पीडितकं तदाहुः ॥ १ ॥

---

**पा०**—करणं (बी) ॥ अत्र स. पुस्तके १३½ अंकः श्लोकः ११½ अङ्कितात् श्लोकादनन्तरम् ॥ अपि च अत्र स. पुस्तके तृतीयश्लोकपूर्वार्धस्य अंशेन १३ श्लोकाः, बी. पुस्तके १३½ ॥

---

**टि०**—नागपाशं फणिपाशं वा क्वचित् 'कामपाशकः' इत्युक्तम् । निजं स्त्रियः । किंचिद्भेदेन इदमन्यत्रोक्तं यथा रतिरत्नप्रदीपिकायां (१६।१४)–" उत्ताना निजजानुमध्य-विलसद्बाहुद्वयाऽनादरादालिंग्य प्रियकंठदेशमबला संदंशनं चाचरेत् । योषित्कंठमथावलंब्य रमणस्तत्कूर्परान्तर्गतौ कृत्वा स्वीयभुजौ रमेत फणभृत्पाशाभिधानं हि तत् ॥ " इति ॥ इदं अनंगरंगे (१०।२०) उपविष्टबंधेषूक्तम् ॥ एतस्यैव भेदरूपं **संयमनं** यथा– " अंगुष्ठ-समर्पितपाणिभृतो जंघायुगलं युवतेः पुरुषः । निजकूर्परयोर्निदधाति भुजौ तत्कंठ इदं किल संयमनम् ॥ " ( र. र. १०।२७ ) इति । अत्र कांचीनाथः–" नायिकायां स्वहस्तां-गुलीभिरात्मनः पादांगुष्ठमूर्ध्वीकृतं गृहीत्वा उत्तानायां, कान्तस्तस्य ( स्या ? ) जान्वोरधः प्रवेशिताभ्यामात्मनो भुजाभ्यां तत्कंठं गृहीत्वा रमते चेत्तदा संयमनं करणं भवति ॥' इति ॥ १३½ ॥ इति अष्टाविंशः ॥ ( ॥ २८ ॥ )

**टि०**—तिरश्चोः तिरश्चीनयोः पार्श्वेण शयितयोः । विघट्टनं विशेषेण संयुक्तत्वम् ॥

द्वयोः स्त्रीपुरुषयोः, तिरश्चोः तिर्यग्भूतयोः, सरलीकृताङ्गयोः, तद्विघट्टनं संपुटकं उक्तम् ॥

प्रिया यदा ऊरुयुग्मेन पतिं निपीडयेत्, तदा पीडितकं आहुः ॥ १ ॥

**यस्मिन् भर्तुः सरलिततनोः कुञ्चितत्र्यस्रनार्या**

**गाढाश्लेषो यदिह मुनयो मुद्गकं तद्वदन्ति ॥**

**पृष्ठे पश्चाद्दयितघटनाकुञ्चितत्र्यस्रगात्रं**

**सीमन्तिन्या विमुखशयनं यत्परावृत्तकं तत् ॥ २ ॥**

कुञ्चितत्र्यस्रनार्याः, कुञ्चितयोनिनार्याः, सरलिततनोः भर्तुः, गाढाश्लेषः आलिङ्गनं, मुनयः मुङ्ग(द्ग)कं वदन्ति ॥

पृष्ठयस्तेः( ष्टेः ? ) पश्चात्, सीमन्तिन्याः विमुखशयनं दयितघटनाकुंचितत्र्यस्रगात्रं पुरुषसंबन्धसंकुचितयोनिशरीरं, तत् परावृत्तकम् ॥ २ ॥

---

**पा०—मुङ्गकं ( स. पु. ) । यस्ते(यष्टेः ? )पश्चाद्० ( स. पु. ) ॥ २ ॥**

---

नीचरते नीचतररते चेदं प्रयोज्यम् । अतः शंखिन्या हस्तिन्याश्चेदम् ॥ इदं द्विविधं उत्तानसंपुटं पार्श्वसंपुटं चेति । प्रकृतं पार्श्वसंपुटस्य लक्षणम् । उत्तानसंपुटस्य तु–"स्त्रीपादौ सरलीकृत्य भूमौ निक्षिप्तजानुकः । स्तनलग्नो रमेत्कामी बंधः संपुटको मतः ॥ " इति स्मरदीपिकायाम् । ( रमेत् इति रम् धातोः आत्मनेपदत्वात् अंतर्भावितण्यर्थः परस्मैपदप्रयोगः, नारीं रमयेत् इत्यर्थः । एवमन्यत्रापि बोध्यम् । ) " पार्श्वसंपुटके तु नायकस्य कटिरुपधानिकायां तिष्ठेत्, नायिकायाश्च शयनीये ।" ( ज. मं. ) । ( उपधानिका उच्छीर्षकं ' उशीसा ' इति भाषायाम् । ) ॥–पीडितं तु वनितायाः ऊरुभ्यां नरवाभ्यां अंघ्रिभ्यां च निपीडनतः ( र. र. १०।२८ ) ॥ इदमपि पूर्ववत् पार्श्वोत्तानभेदेन द्विविधम् । तत्र उत्तानपीडितं रतिरहस्ये ( १०।१९ ) उक्तम् ॥ इदमपि नीचरते योज्यम् ॥ १ ॥

टि०—मुद्गकं ' समुद्गकं ' ' समुद्गः ' वा । त्र्यस्रः त्रिकम् । अथ बंधस्य लक्षणं–" तिर्यक्शायितकांतायाा ऊर्वोर्मध्ये पुमान्निजौ । ऊरू विन्यस्य रमते तामालिंग्य समुद्गकम् ॥ " ( र. र. प्र. १६।१९ ) इति ॥ परावर्तकं ' परिवर्तनकम् ' (र.र.१०।३०) । कामसूत्रव्याख्याविशेषभूते कंदर्पचूडामणौ–" पृष्ठस्थचंद्रमुख्या आरचयंत्याः परिष्वंगम् ।··· पराङ्मुखत्वे परावृत्तम् ॥" इति, "नायको नायिका वाऽपि संप्रयुक्तस्समुद्गकः । परिवृत्तिं यदि भजेत्परिवर्तितकं रतम् ॥ " (१६।२०) इति च रतिरत्नप्रदीपिकायाम् ॥ कुंचितत्र्यस्रगात्रं, लघुपूर्वतनु ' इत्यन्यत्र ॥ २ ॥

जङ्घाद्वयेनैव नरस्य जङ्घे
स्त्री वेष्टयेद्वेष्टितकं प्रसिद्धम् ॥
भगेन लिङ्गस्य निपीडने तु
वदन्ति तद्वाडवकं मुनीन्द्राः ॥ ३ ॥

स्त्री एकनरस्य जंघायां जंघाद्वयेन वेष्टयेत्, तत् वेष्टितकं प्रसिद्धम् ॥
भगेन लिङ्गस्य निपीडने, मुनीन्द्राः तत् वाडवं वदन्ति ॥ ३ ॥

आसीनकान्तत्रिकपादयुग्मं
नितम्बवत्या यदि युग्मपादम् ॥

---

**पा०**—द्वयेनैक (स. पु.)। निपीडनेन (बी)। तद्वादरकं (बी.) (अक्षरभ्रमतः पाठः) ॥ ३ ॥ (२९१रि०) ॥

---

**टि०**—जंघाद्वयं ऊरुयुगस्योपलक्षणं, तथा च रतिरहस्ये-" परिवर्तित ऊरुयुगे तु भवेदिदमेव हि वेष्टितनामधरम्।" (१०।२०) इति। (इदं पीडितकम्।) इदमपि नीचरते, अत्र 'जघनं पूर्वस्मासंवृततरं भवति।' (ज.मं.) ॥ पुरुषकर्तृकोरुपीडने पीडितं, स्त्रीकर्तृके तस्मिन् वेष्टितकं इति भेदः। कांचीनाथस्तु "अन्ये पुनराहुः—परिवर्तनं नाम ऊर्वोर्विवृतसंवृतत्वे, रते ऊर्वोः कदाचिद्विवृतत्वं कदाचित्संवृतत्वं यदि संजातं तदा वेष्टितं नाम करणं भवति।" इति ॥ स्मरदीपिकायां तु इदं कुड्याश्रितस्त्रीकर्तृकोर्ध्वरतोद्देशे निवेश्य प्रकारांतरेण लक्षितं-" हृदि संस्थाप्य पादैकमितरेणैव वेष्टयेत्। कान्तं कुड्याश्रिता नारी बंधो वेष्टितको मतः ॥" इति ॥ अनंगरंगे (१०।१२) इदं उत्तानबंधेषु उक्तम् ॥ "वडवेव निष्ठुरं चेदवगृह्णीयाद्ध्वजं प्रिया पुंसः। तद्वाडवकं निगदितमभ्यासादान्ध्रदेश्यानाम्॥" इति कंदर्पचूडामणौ। (गृह्णीयात्—भगोष्ठपुटेन इति केचित्, वस्तुतस्तु पायुस्मरमंदिरद्वारमध्यवर्तिन्या अर्धचंद्राकारायाः संकोचनीत्याख्यायाः 'कोन्स्ट्रीक्टर वेजिनी' इति यूरोपदेशीयमूलभाषायां 'कबज़' इति च अरबीयभाषायां प्रसिद्धाया नाड्याः संकोचनेन इत्यर्थः।) इदमपि नीचरते। "ध्वजे मंदवीर्यत्वादस्फुरे (अचेष्टे) सति अनेन करणेन योषित् ध्वजस्फुरणमनुभवति, अथवा निश्चेष्टे ध्वजे सति योषित् रतौ भगेन ओष्ठपुटेनापि गृह्णाति तदा ध्वजस्तुरगमेहनसदृशो भवति एतद्वाडवकं करणम् ॥ चरणौ ऊर्ध्वं नायको यस्या धारयेदिति जृंभितकं, कुंचितौ पादौ धारयेच्चेत् पीडितकं, ऊरू व्यत्यसेदिति वेष्टितकं, वडवेव निष्ठुरमवगृह्णीयादिति वाडवकम्।" इति (र.र.टी.१०।२०) कांचीनाथः ॥ ३ ॥ युग्मपादं 'युग्मपदं' (र. र. १०।३१) वा। आसीनकान्तत्रिके पार्श्वशयानायाः तरुण्याः पादयुगं इति भावः ॥ अस्य रतिरहस्यस्थस्य वर्णनस्य भावः कांचीनाथेन प्रकाशितो यथा-"आसीनायाः (?) एकः पादः प्रस्तारितः, एकः पादः कुंचितः, तदा पुरुषः

पार्श्वे स्थितानां मृगलोचनानां
गीतानि तज्ज्ञैः करणानि सप्त ॥ ४ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे–पार्श्वकरणानि सप्त–ऊनत्रिंशः परिच्छेदः ॥ ]

आसीनकान्तत्रिके, पादयुग्मं नितम्बवत्याः स्त्रियाः यदि, युग्मपादम् ॥

त्रिके तिर्यक्स्थितानां मृगलोचनानां, गीतानि सप्त, तज्ज्ञैः पण्डितैः, करणानि ॥ तिर्यक्करणानि सप्त ॥ ४ ॥

---

मयूरकाद्याश्रितया तरुण्या
कान्तस्य योगोऽथ विपर्ययेण ।
विधायकं कल्पज(क?)शास्त्रविद्भि-
स्त्वासीनसंज्ञं करणं तदुक्तम् ॥ १ ॥

मयूरकाद्याश्रितया तरुण्या, विपर्ययेन(ण) कान्तस्य योगः, कामशास्त्रविद्भिः ह्या( आ )सीनसंज्ञं, विधायि(य)कं करणं, उक्तम् ॥ १ ॥

---

पा०—विधायिकं (स.पु; बी) ह्यासीनसंज्ञं ( बी; स. पु. ) ॥ १ ॥

---

संमुखीभूय स्थित्वा स्वपदं तस्याः प्रसारितपदस्याधः प्रसार्य इतरत्कुंचितमात्मपदं कुंचितेन तत्पदेन दृढं श्लेषयित्वा, अन्योन्यमालिंग्य चुंबितौ मिलितौ चेत्, युग्मपदं करणं भवति ।" इति ॥ अनंगरंगे तु इदं उपविष्टबंधभेदेषु निवेशितम् । तत्र च–" स्थितां स्त्रियं कुंचितपादयुग्मां तथैव भर्ता कृततिर्यगंगः । भजेत चेत्कामकलाविदग्धो बंधं तदा युग्मपदं वदंति ॥" ( १०।२३ ) इति, तत्र स्थितां इत्यस्य पार्श्वेण शयितामित्यर्थः ॥ इत्यूनत्रिंशः ॥ (॥ २९ ॥)

टि०—अत्रोक्तयोर्बंधयोर्वर्णनमन्यत्र नोपलभ्यते ॥ मयूरकं मयूराद्याकारयुतं सपृष्ठमासनम् । इदं अन्यविधानामासनानामुपलक्षणम् । आश्रितया तत्र निषण्णया । विपर्ययेण यद्वा तत्रासीनस्य कान्तस्य । विधायकं आसनम् । कल्पकाः प्रकृते कामशास्त्रोक्ता नियमाः । अस्मिन्बन्धे आसनस्योच्चत्वे सति नायकः स्थितः कृततिर्यगङ्गः, जानुगो वा भवति ॥ १ ॥

मञ्जीरकान्तिच्छुरितत्रिकस्य
पर्यङ्कबन्धस्थिरभर्तुरङ्कम् ।
स्थिताङ्गनाबाहुविषक्तकण्ठं
प्रशस्तमेतल्ललितं विधिज्ञैः ॥ २ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे–आसीनकरणे
द्वे–त्रिंशः परिच्छेदः ॥ ]

मञ्जीरकान्तिच्छुरितस्य पर्यंकबन्धवत् स्थिरं( र ? )भर्तुः पर्यंकबन्धस्थिरभर्तुः, अङ्कं शरीरं, बाहुविश्क्तकण्ठ( ण्ठी ? ) अङ्गना स्थिता, तदा विधिज्ञैः एतत् ललितं प्रशस्तं उक्तम् ॥ २ ॥

इत्यासीनकरणे द्वे ॥ २ ॥

---

अनुच्चैः पूर्वाङ्गं, निजचरणयोः पाणियुगलं,
तथा यष्टेः पश्चात्स्थितपतिकराश्लिष्टमुदरम् ।
नितम्बिन्या धीरैः पशुकरणमेतन्निगदितं
प्रशस्तं यत्सिन्धौ मरुकुरुजनैश्चापि सुतराम् ॥ १ ॥

---

**पा०**—विषक्तकण्ठी ( स. पु. ) । °ल्लसितं ( बी ) ॥ २ ॥

**पा०**—परि० ३१–श्लोकद्वयात्मकोऽयं परिच्छेदः प्रभ्रष्टः सटीकपुस्तके लेखकप्रमादात् । ने° पुस्तके अस्त्येव ॥

---

**टि०**—ललितमित्यत्र **लसितं** इति पाठः अन्यपुस्तके । मंजीरौ नूपुरौ । पर्यंकबंधः–वामपादस्य दक्षिणोर्वपरभागस्याधो निवेशनेन दक्षिणपादस्य च वामोर्वोरधोभागे निवेशनेन जायते, 'पलांठी' इति भाषायां प्रसिद्धः, तेन निश्चलशरीरस्य । विधिज्ञैः बंधकरणकुशलैः । अस्मिन् बंधे पुरुषस्यांके विवृतोरुः नायिका संभोगायोपविशति, यद्वा सा पूर्वबंधविपर्ययेण ऊर्ध्वस्थिता संप्रयुक्ता भवति ॥ इदमेव पंचसायके **पद्मासन**मित्याख्यया उपविष्टबन्धेषु प्रोक्तं, तथाहि तत्र–"पद्मासनं संपरिकल्प्य भर्ता क्रोडोपविष्टां युवतीं रमेच्च । अन्योन्यकंठार्पितबाहुबंधात् पद्मासनाख्यं प्रवदन्ति सन्तः ॥" इति ॥ २ ॥ इति त्रिंशः ॥ ( ॥३०॥ )

**टि०**—पूर्वांगं नाभेरूर्ध्वं शरीरम् । निजायाः नायिकायाः । यष्टेः नायिकायाः शरीरस्य । सिंधौ इत्यादिना एतत्करणे देशविशेषेषु अत्यासक्तिमाह । पशुकरणमिति, तथाहि स्मरदीपिकायां–" स्त्रियमानतपूर्वाङ्गीं पादाहितकरद्वयाम् । धृतोदरो रमेत्कामी बन्धोऽयं पशुनामकः ॥ " इति । मूले निजचरणयोरित्यादिना रतिरहस्यादिषु ( १०।३८ ) उक्तं 'धेनुकं' इदमिति विज्ञेयम् । " तत्र पृष्ठं उरःकर्माणि लभते " इति कामसूत्रम् ॥१॥

तनौ तल्पालीने निजकरधृतं पार्ष्णियुगलं
नितम्बिन्याः पृष्ठं नतमतिशयोत्क्षिप्तजघनम् ।
समुन्नीतं पश्चात् परमदयितेनोरुयुगलं
स्मृतं व्याघ्रस्कन्दं करणमशतं ( नं? ) दुष्करमतम् ॥ २ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे–अधोमुखकरणे
द्वे–एकत्रिंशः परिच्छेदः ॥ ]

---

तन्व्या नरेणोद्धृतपादमेकं
चान्यं पृथिव्यां हरिविक्रमाख्यम् ॥
कान्तत्रिकारोपितपादमेकं
तदोच्यते व्यापर(व्यायत?)नामधेयम् ॥ १ ॥

---

टि०—' व्याघ्रावस्कंदं ' इति कामसूत्रे व्याघ्रस्य इव ' अवस्कन्दनं कटिभागेऽभिपतनं ' (ज. मं) इत्यन्वर्थसंज्ञकमिदं नान्यत्र कुत्रापि वर्णितं लभ्यते । तनौ शरीरे नायिकायाः । निजाभ्यां प्रियस्य । पार्ष्णिः पादतलस्य पश्चिमो भागः 'पाह्नी' इति भाषायां प्रसिद्धः । उत्क्षिप्तं उच्चैःकृतम् । अशनं पश्चाद्भागे व्याघ्रवत् । ' **दुष्करतमम्** ' इति पाठः समीचीनः स्यात्, अभ्याससाध्यं इति च तदर्थः । स्त्रीणां क्लेशदमिदम् । यूरोपीयदेशे 'व्हील-बेरो ' इति संज्ञितमिदम् ॥ २ ॥ अत्र धेनुके नायिकायाः भूगतस्तनभुजास्यमस्तकत्वे ' **करिपदं** ' ' ऐभं ' इति वा । एवमत्र ऐणशौनादयो बहवो भेदाः स्वयमूह्या विस्तरभियाऽनुक्ताः ग्रंथान्तरेभ्यो ज्ञेयाः ॥ इमे बंधाः 'अधोमुखकरणानि' 'व्यानतानि' 'पशुबंधाः' इत्यपि आख्याताः ॥ एषु गर्भाशयस्य व्यानतत्वात् शीघ्रं गर्भधारणं भवति ॥ पुरुषस्य नायिकानितंबोपरोधात् उच्चरते इमे प्रयोज्याः ॥ पशुसृष्टौ इदमेव करणं इति इदं एव स्वाभाविकं, तद्विपरीतं उत्तानकरणं तु कृत्रिमं, मनुष्येष्वेव दृश्यते इति उभयोर्भेदकं इति च अवगंतव्यम् ॥ यद्यपि मदनसाम्राज्यभाणे धेनुकवीरायितयोः कतरं स्त्रीपुरुषरंजकमिति वादमुत्थाप्य–" व्यालोलहारनिकरवल्गत्कुचकुंभ–दरहसितगंडपालि–घर्मजलबिंदुनिटिलार्धोन्मीलितनयन–संचलदलकानां दर्शनेन (वीरायिते) नयनानंदोऽपि संभवति, तदुक्तस्य ( धेनुकस्य ) इत्थं नास्ति वागवसरः, केवलमान्तरसंभोगानन्द एवेति " इति पुरुषायितं प्रशस्यतरमुक्तं, तथापि धेनुके सम्यक्तया कुचग्रहणं, मदनच्छत्रस्याङ्गुल्या घर्षणं, पायोः ताडनं, नितंबफलकपीडनं, साचीकृतमुखायास्तरुण्याश्चुंबनादिकर्मसौकर्यं च जायते इति बहुगुणत्वात् धेनुकादिकं कामिनां प्रियतरमित्यपि मतम् ॥ इत्येकत्रिंशः ॥ ( ॥ ३१ ॥ )

टि०—अत्र एकतमस्य उत्थितबंधस्य वर्णनपरः एकः श्लोकः प्रभ्रष्ट इत्यनुमीयते॥ उत्थितकरणानि ' स्थितबंधाः ' इत्यपि ख्यातानि ॥ हरिविक्रमं–हरिः सिंहः तद्वत् विक-

तन्व्याः स्त्रियाः, एकं पादं, नरेण पुरुषेण उद्धृतं; अन्यं पादं, पृथिव्यां पृथ्वीतले, तत् हरिविक्रमाख्यं उच्यते ॥

कान्तस्य त्रिके आरोपितं पादमेकं तदा व्यापरनामधेयम् ॥ १ ॥

**नृहस्तयोः पादतले धृते तु**
**विषक्तकण्ठ्याऽर्पितनामधेयम् ॥**
**धृतं निजे वक्षसि वल्लभेन**
**स्त्रीपादयुग्मं प्रवदन्ति दोलाम् ॥ २ ॥**

नृहस्तयोः पुरुषहस्तयोः, विषक्तकण्ठ्याः स्त्रियाः पादतले धृते सति, आवित-नामधेयम् ॥ वल्लभेन निजे वक्षसि स्त्रीपादयुग्मं तदा दोलां प्रवदन्ति ॥ २ ॥

**नार्या यदा बाहुविषक्तकण्ठ्या**
**नितान्तसंयोजितपादयुग्मम् ।**
**स्थितस्य कुड्याश्रितनायकस्य**
**त्र्यस्रे तदा विद्धि वि(द्ध्यव ?) लम्बिताख्यम् ॥३॥**

---

पा०—कंठ्यावित (स.पु;बी.) ॥ २ ॥

---

मः आक्रमणं योषित ऊर्ध्वगतैकपादत्वात् इति, यद्वा स्त्रियः एकः पादः नरस्य च द्वौ पादौ भूम्यां इति त्रिपदत्वात् हरिः विष्णुः वामनरूपः तस्य विक्रम इव विक्रमः त्रिपादमितः यत्र तत् । अत एव 'त्रिपादं' इत्यस्य संज्ञा पंचसायके ॥ व्यापरं—स्त्रियः पादस्य पुरुषत्रिकारोपणेन स्मरमंदिरस्य व्यायतत्वात् '**व्यायत**नामधेयम्' इतिपाठः समीचीनः स्यादिति भाति ॥ इदं करणं नान्यत्र वर्णितम् । पंचसायकोक्तं 'व्यायतकं' त्वस्माद्भिन्नम् ॥ १ ॥

**टि०—आवितं**—'विषक्तकंठार्पितं' इति नाम अन्यत्रोल्लिखितं दृष्टं, तेन प्रकृते स्त्रीपादयोः कान्तहस्तयोः समर्पणात् अस्य '**अर्पितं**' इति संज्ञा, 'कण्ठ्याऽर्पितनामधेयम्' इति च पाठः अत्र स्यादिति प्रतीयते ॥ इदमेव 'द्वितलं' इत्याख्यया प्रोक्तं रतिरहस्ये, तथा च तत्र—"भित्तिगप्रियकरस्य सुंदरीपादयोर्द्वितलसंज्ञकं मतम् ॥" (१०।३५) इति ॥ दोलाबंधस्य लक्षणं मीननाथकृतस्मरदीपिकायां तु—" नारीजानुद्वयं धृत्वा आत्मबाहुद्वयोपरि । कुड्याश्रितं रमेत्कान्ता बंधो दोलादिनामकः ॥" इति ॥ 'दोलितं' 'आन्दोलितं' '**दोलायितं**' वा एतस्माद्भिन्नं, तद्यथा दीनालापनिकाशुकसप्तत्यां (२३।४४) " शय्यान्तस्थितनाथपादयुगले निःक्षिप्य कुक्षिं निजामन्योन्यांगुलिमध्यपीडितकरा दोलीकृता प्रेयसा । कान्ता··संभोगमातन्वती··बन्धं तदान्दोलितम् ॥" इति ॥२॥ त्र्यस्रे त्रिके । 'नायककण्ठात् नायिकाया अवलंबनात अवलंबितकम् । एतदेव विस्तरतो वर्णितं रतिर-

बाहुविश(ष)क्तकण्ठ्याः बाहौ आसक्तकण्ठः यस्याः सा तस्याः नार्याः, त्र्यस्रे यूंन्नौ स्थितस्य कुडयाश्रितनायकस्य नितान्तसंयोजितपादयुग्मं, तदा वि( अव ? )-लम्बिताख्यं, विद्धि जानीहि ॥ ३ ॥

नृकूर्परद्वंद्वविलम्बिजानुं
नितम्बिनीं बाहुविषक्तकण्ठीम् ।
निवेष्टयेद्बाहुयुगेन मध्ये
स्थितः पतिः कूर्परजानुसंज्ञम् ॥ ४ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे—उत्थितकरणानि
सप्त—द्वात्रिंशः परिच्छेदः ॥ ]

मध्ये स्थितः पतिः, नृकुर्परद्वंद्वविलम्बजानुं बाहुविषक्तकण्ठीं नितम्बिनीं स्त्रीं, बाहुयुगेन वेष्टयेत्, तत् कुर्परजानुसंज्ञं ज्ञेयम् ॥ ४ ॥

उत्थितकरणानि सप्त ॥ ७ ॥

---

पा०—विलंब ( स.पु;बी )। जानु नितंबिनी···ण्ठम् ; निवेशयेद्बा० ( बी ) ॥४॥

---

हस्ये (१०।३६)–"भित्तिगस्य करपंजरे स्थिता प्रेयसो विधृतकंठदोर्लता । ऊरुपाशपरिवेष्टितप्रियश्रोणिरंघ्रितलताडनाश्रया । दोलति श्वसिति सीत्कृताकुला योषिदेवमवलंबितं मतम् ॥" इति । ( अंघ्रीत्यादि ) ' कुड्यं चरणाभ्यामाक्रम्य वल्गतीत्यर्थः ' ( कांची० ), 'तदानीं हस्तलाघवात् कदाचिदूर्ध्वं गच्छति कदाचिदधस्तात् गच्छतीति भावः ।' (कांची०) इदमेव अनंगरंगे ( १०।२१ ) ' कीर्तिबंधः ' इति व्यवहृतम् ॥ ३ ॥

टि०—नृकूर्परौ नरस्य जानुकूर्परौ अभिप्रेतौ । अत्र पुरुषः स्थितः, स्त्रीपादौ च वलितौ भवतः ॥ रतिरहस्यानंगरंगयोस्तु एतद्वैपरीत्येन स्त्रीस्थितिरुक्ता, तथाहि अनंगरंगे (१०।२५)–" संवेष्टयित्वा निजकूर्परेण जान्वंगनाया अवलंब्य कण्ठम् । रतिं प्रकुर्यादिति कूर्पराख्यो बंधः प्रदिष्टः स च जानुपूर्वः ॥" इति । उभयोरपि एकैव संज्ञा ॥ ४ ॥

करणानि आसनानि संवेशनानि बन्धाः लयाः स्मरयंत्रविधयः वा इति व्यवहृतानि । तानि च आभ्यंतररतस्य भेदाः । आभ्यंतररतं च नायकप्रयुक्तं नायिकाप्रयुक्तं चेति द्विविधम् । तत्र द्वितीयं विपरीत–पुरुषायित–वीरायितेत्यादिभिः नामभिः प्रसिद्धं अत्र नो वर्णितं रतिरहस्यादिभ्योऽवगंतव्यम् । तच्च बहुषु काव्येषु भाणेषु च रमणीयतया वर्णनाविषयीकृतम् । आद्यं तु यथा नायिकाङ्गस्थितिः उत्ताना पार्श्वशयिता उपविष्टा ऊर्ध्वं स्थिता अधोमुखी वा स्यात् तथा तदनुसारेण उत्तानबंधः, पार्श्वबंधः तिर्यग्बंधः आणिक्यं सुरतं वा, उपविष्टबंधः आसितकबंधः आसीनकरणं वा, स्थितबंधः ऊर्ध्वबंधो वा, व्यानतबंधः पशुकरणं वा, इति

पंचधा उक्तम्। तेषां चतुरशीतिसंख्याका उपभेदा जायंते ते विस्तरभियाऽत्र नोक्ताः, अपि तु केवलं प्रधानभूता वर्णिताः ॥–अत्र उत्तानशयने ये बंधप्रकाराः प्रोक्ताः तेषु केचन पार्श्वशयने उपविष्टे च संभवंति इति तादृशानां केषांचित् रतिशास्त्रेषु अन्यान्येषु पार्श्वादिभेदेषु निवेशः कृतः इति ज्ञेयम् ॥–एषां बंधानां प्रयोजनं तूक्तं शृंगारदीपिकायां (परि० ३) हरिहरेण–" तदल्पदीर्घलिंगानां समसंभोगसिद्धये। वक्ष्ये बंधांश्चतुरशीतिसंख्यान्युक्तिविशेषतः ॥ १३ ॥ आरोहावरोहाभ्यां कामिन्याः कुसुमस्य च। विषमः समतां याति समो विषमतां व्रजेत् ॥ २९ ॥ (आरोहणं उच्चैर्भवनम्। कुसुमं कमलं गर्भाशयमुखम्। विषमः विषमं रतमिति भावः।) बंधेन येन रमणी विनिमीलिताक्षी स्रस्ताङ्गकाधंगदिता ननु (?) मेयरावा। विस्मृत्य देहमभितो नखपीडितानि दीर्घस्रवा भवति तेन रतेन भोग्या ॥ ३० ॥" इति ॥ अत्र स्मरमंदिरस्य विशालताघनतामूलवैषम्ययोः प्रयोज्यः सामान्यो विधिरुक्तो रतिरहस्ये (१०।११)–" शिथिलस्मररन्ध्रघनीकरणं यदि संयमितोरु भवेत्करणम्। सुघने जघने शिथिलीकरणं विवृतोरुकमेव मतं करणम् ॥" इति ॥ (समे रते तु यथास्थितोरुकं इत्याशयः। जघनं लक्षणया स्मरमंदिरम्।) उत्ताने च पुरुषस्य पादयोः प्रसारणे ध्वजस्य पूर्णः प्रवेशः, अर्धोपवेशने च न्यून इति, नीचरते आद्य उच्चरते चापरो विधिः प्रयोज्यः। समरतिसंपादनाय उक्तबंधेषु अधोमुखं धेनुकं च नीचरते, मार्कटकं नागबंधश्च अतिनीचरते, कौर्मं परमनीचरते, एकपदं उच्चरते, अवलंबितं अत्युच्चरते च प्रयोज्यम्। एवं अन्यत्राप्यूह्यम् ॥–बंधेषु च "नायिकाया अंसौ कंठः कुचौ पार्श्वे नितंब ऊरू च यदालंबनयोग्यं भवति तदेव गृहीत्वा रमणेन रतिः कार्येत्युपदेशः। इदमेव करणेषु पुरुषस्यावलंबनम् ॥" इति रतिरहस्यटीकायां (१०।२२) कांचीनाथः ॥ एकस्मादेव बंधात् हस्तपादादीनां संनिवेशभेदेभ्योऽपरे बंधप्रकाराः जायंते, यथा–नायिकाचरणौ नायक ऊर्ध्वं धारयेत्तदा 'जृंभितकं,' तौ एव कुंचितौ धारयेत् तदा 'पीडितकं,' तावेव ऊरुव्यत्यासपूर्वं धारयेत्तदा 'वेष्टितकम्।' एवमन्यत्राप्यूह्यम् ॥–पूर्वोक्तोत्तानादिपंचभेदेषु नायिकानां प्रायः उत्तानरतमेव आनंदप्रदं जायते, यतः तत्र ताभिः कमलपीडनं पूर्वागपीडनं च सम्यगनुभूयते। पार्श्वबंधेषु नितंबभारेण स्मरमंदिरस्य गाढत्वात् स्मरमंदिरपार्श्वयोः लिंगेन सुष्ठु संघर्षणात् कोप्यानंदातिशयः जायते, अतः शंखिनीहस्तिनीविषयकाः प्रायः इमे। उपविष्टबंधेषु सुरतसमये आलिंगनादिबाह्यरतेषु सौकर्यं लभ्यते। स्थितबंधाः क्लिष्टत्वात् रोगोत्पादकत्वाच्च नातिद्रियन्ते। व्यानतबंधास्तु प्राय उत्तानबंधसमाना अपि तेषु स्त्रीकटिचालनसौकर्यकमलावरोहादिगुणत्वात् लघुध्वजानां प्रियतरा भवंति। पुरुषशैथिल्ये तु पुरुषायितं प्रयुज्यते, तत्र पुरुषयोग्यकर्मणि प्रवृत्तानां रमणीनां प्रचलत्कुचकुंभग्रहण–जघनदर्शन–नितंबचालन–कपोलाकर्षण–श्रमवर्धितवदनकमलकान्तिकलनादि–कर्मगुणबाहुल्यात् तत् धन्यानां कामिजनानामुपभोग्यं भवति ॥- एभ्यो विलक्षणानि चित्ररतानि, तेषु स्तनान्तररतं, कक्षारतं, जानुरतं, पादतलमध्यरतं, मुष्टिरतं, " भगे निक्षिप्य जिह्वां यो विलोलं चुंबति प्रियः। तथैव रमणस्यापि नारी लिंगं प्रकर्षति ॥" इति स्मरदीपिकायामुक्तं द्विविधं 'गोमेहुष'

इति पाश्चात्यखण्डे प्रसिद्धं मुखरतं, निंद्यमपि कुत्रचित्प्रवृत्तं पायुरतं, तथैव अतिनिंदितानि पशुसंगमनानि अन्वर्थनामानि प्रसिद्धानि । अन्यानि च विपरीतोरुकं स्त्रीद्वयं युगपत् कामुक एति युगपदेव कामुकद्वयं वा स्त्री यत्र तत् 'संघाटकं,' तथा विपरीतौपरिष्टिकादिना एकयैव नरचतुष्कं रम्यते तत्, तथा एकस्यैव बह्वीभिः सह 'गोयूथिकं' च कामसूत्रादिभ्यो बोध्यानि ॥–तथा सुरतप्रवृत्तौ आरंभे मध्ये वा उपयुक्तानि मंथनादीनि नव 'पुरुषोपसृप्तकानि' ( लिंगप्रवेशभेदाः तदाघातप्रकारा वा ) कामसूत्रस्य द्वितीयाधिकरणस्य षष्ठे अध्याये उक्तानि आनंदविशेषजनकानि ततो ज्ञेयानि ॥ एवं उत्तानबंधेषु समपाद–व्योमपाद–स्मरचक्रादयः, पार्श्वबंधेषु कोणकादयः, उपविष्टेषु बंधुरितादयः, अधोमुखेषु करिपदादयश्च अत्रानुक्ता अन्येभ्योऽवसेयाः । ते च चतुरशीतिबंधा दीनालापनिकाशुकसप्तत्यां महीशूरमहाराजकृष्णराजेण प्रणीते सौगंधिकापरिणये चोक्ताः । तत्र क्वचित्क्वचित् देशभेदेनापि सुरतवैशिष्ट्यं उक्तं, यथा–" स्त्रीराज्ये बहुभिः कान्तैरेका स्त्री रमते भृशम् । कर्णाटे युवतीभिश्च बह्वीभी रमते युवा ॥" ( र. र. प्र. १६।२५ ), वाडवकं आंध्रीषु, पशुकरणं सैंधवीमारव्याद्यासु, अधोरतं दाक्षिणात्येषु इति ॥ एतेषां विविधानां बंधानां बोधाय चिरस्थायिनी शिलोत्कीर्णानि प्राचीनानि दृश्यानि (१) एलापुराचले ( अधुना 'एलोरा' नाम्ना प्रसिद्धे ) पर्वतमुत्कीर्त्य निर्मितेषु सुरमंदिरेषु, (२) श्रीजगन्नाथपुर्यां भुवनेश्वरमंदिरे, (३) 'विझागापट्टं' इति ख्याते विशाखपत्तने कस्मिंश्चिन्मंदिरे, (४) अर्बुदाचले अचलेश्वरमहादेवसमीपस्थे जैनमंदिरे, (५) कोयलीपर्वते हरसिद्धयाख्याम्बिकादेवालये, (६) सातारापंढरपुरमार्गवर्तिनि कटेश्वरमंदिरे, (७) ईडरइति नाम्ना ख्याते इल्दुर्गविषये ब्रह्मखेटकग्रामे चतुर्मुखस्य ब्रह्मणो मंदिरे, चित्राणि च काश्यां नेपालीयमंदिरे वर्तन्ते। पवित्रेषु मंदिरेषु एतेषां निवेशो दृष्टिदोषविघाताय इति न दोषः इति तद्विदां मतम्॥ सुरतक्रमस्तु " दर्शनेन रतिं कृत्वा स्त्रियाः स्पर्शनमाचरेत् । स्पर्शेन द्रवमुत्पाद्य शनैः संभोगमाचरेत् ॥" ( २।३४–३५ ) इति हरिहरकृतशृंगारदीपिकायां, ग्रंथान्तरे च–"आश्लेषं प्रथमं कुर्याद्द्वितीयं चुंबनं तथा । तृतीयं नखघातश्च, दंताघातश्चतुर्थकम् ॥ पंचमं क्षेपणं प्रोक्तं, षष्ठं प्रहरणं तथा । सप्तमं कंठशब्दश्च, बंधाख्यं चाष्टमं रतम् ॥" इति उक्तः । ( क्षेपणं ध्वजस्य, प्रहरणं ध्वजेन । )—अस्मिन् विषये इमे अपि विशेषा बोध्याः यत्–अन्नरसादिषड्धातुसाररूपः सप्तमो धातुः वीर्यं पुरुषाण्डयोः जन्यते, तच्च मैथुनेन लिंगस्थनाडिकया बहिर्निःसरति । स्त्रीवंक्षणयोरन्तर्भागे स्त्र्यण्डाशयः, ततो रजस उद्भवः, यन्मासिमासि बहिर्निर्गच्छति ॥ सुरताय पुरुषाणां ध्वजोत्थानमपेक्षितं, स्त्रीणां तु अतथाविधत्वेऽपि ध्वजप्रवेशे एव तासां मन्दवेगानामपि सुरताभिलाषो जायते ॥ सुरते आनन्दस्थानं पुरुषाणां ध्वजाग्र एव, स्त्रीणां तु गर्भाशयमुखं, यत्र ध्वजाग्रसंस्पर्शमात्रेण तेषां तासां च अवर्णनीय आनन्दातिशयः स्फुरति, तदुक्तं रतिकल्लोलिन्यां–" उद्गर्भशय्यावदनान्तिकस्य( स्थं ? ) चिंचाप्रसूनप्रतिमं भगान्तः।तद्ब्रह्मसौख्यास्पदमाहुरार्याः स्पर्शात्परं द्रावकमङ्गनानाम् ॥(९६)॥ ( चिंचाप्रसूनं 'आमली' इति भाषायां ख्यातस्य वृक्षविशेषस्य पुष्पम् । स्पर्शात् लिंगेन

इति शेषः ।) यस्तिन्तिणीस्पर्शमुपैति, वेत्ति न संसृतेः कामपि हन्त चेष्टाम् । बुद्धिं तदद्वैतवर्ती विधाय स जातु मातुर्जठरं न याति ॥" (२८४) इति । (तिन्तिणी गर्भाशयमुखम् ।) अत एव सर्वेषु रतेषु समरतमेव बहुमतं, यत्र ध्वजाग्रतिन्तिण्योः स्पर्शमात्रं जायते ॥ अपि च चण्डवेगानां स्त्रीणां मंदवेगपुरुषैर्निर्वर्तितानि चुंबनालिंगनादीनि न तथा आह्लादकानि यथा तान्येव चंडवेगपुरुषैः कृतानि । अतः स्त्रीणां दैवयोगात्प्रारब्धाद्वा प्रचण्डान्दोलनयुक्तेन चंडवेगेन समागमे जाते ता मंदवेगपत्यनुरागिण्यो भवंति । एवमेतद्वैपरीत्येऽपि । एवमेव कालभेदेऽपि । अतः सम्यग्रतिसमृद्धिसंपत्तये स्त्रीक्षरणकालवेगादीनि परीक्ष्य कामशास्त्रोपदिष्टरीत्या पुरुषैस्तदानुगुण्येन भाव्यम् । तत्र साधनप्रमाणोत्थसमरतादिभेदमुद्दिश्योपदिष्टं रतिरत्नप्रदीपिकायां–"समं मध्यमवेगेन, चण्डवेगेन नीचकम् । उच्चं मंदवेगेन, कुर्यादेवं रतिं बुधः ॥" इति । अपि च मंदभावाः शीतला अपि स्त्रियः विधिना भंगाकस्तूरीविषतिण्डुकादीनां सेवनेन मुष्टिलतायष्टयादिताडनैर्वा चण्डभावत्वं प्राप्यन्ते । स एव विधिः शीतलपुरुषाणामपि ॥ अपि च बालायाः संगमे यद्यपि तासां लज्जाभयवशंवदत्वात् किमपि सौख्यमनुभूयते, तथापि रसिकशेखराणां तु परिचितविविधसुरतानां कामोद्धतानां मुग्धामध्यालीलानुकरणदक्षिणानां त्यक्तलज्जाभयानां प्रौढाङ्गनानामेव विलासाः परमप्रमोदाय भवन्ति ॥–आभ्यंतरसुरते लिंगघर्षणेन स्त्रीणां कण्डूत्यपनयनं भवति, अंतर्नाडीक्षोभणाच्च कामसलिलक्षरणं, तथापि तासां कामशान्तिस्तु रेतःसिंचनेनैव, यदन्तरा केवलं कामवृद्धिः सन्तुष्टयभावो वा भवति ॥ स्त्रीणां सुरततृप्तिद्योतकं कामसलिलक्षरणं कासांचिदेकवारेणैव निवर्तते, कासांचिच्च बहुशो भवति । तत्रापरविधाभिः आद्यक्षरणानन्तरं तादृशा एव कामाङ्कुशघाताश्चण्डतरा अनुभूयन्ते, वीर्यपातसमकाल एव तासामन्तिमक्षरणेन उभयोः परमा तृप्तिश्च संजायते ॥ सुरते पुरुषाणां आरंभे लिंगेनैव योनिद्वारोद्घाटने तस्य कामालये प्रथमप्रवेशे चानन्दातिशय इति केषांचिन्मतं; मध्ये घर्षणकर्मण्येवेत्यपरेषां; रेतःक्षरणकाले एवेत्यन्येषां च । तत्र "भिन्नरुचिर्हि लोकः" इतिन्यायस्य प्रवृत्तिर्विज्ञेया ॥ अपि च एकस्यामेव रात्रौ द्विवारं बहुवारं वा सुरतकर्मप्रवृत्तौ स्त्रीणां कामाधिक्यात् प्रथमसुरतात् द्वितीये भावस्तृप्तिश्चाधिकत्वेन जायते पुरुषाणां तु तद्वैपरीत्येनेति केषांचिन्मतम्॥–करणेषु उत्तानबंधे स्त्रीपुरुषयोः संमुखत्वं, पशुकरणे तयोर्विमुखत्वं, (१) पार्श्वस्थितविपरीतबंधेषु तु तदुभयकृतभेदेन बन्धवैविध्यं भवति, (२) तथैव उत्ताने आसीने च पुरुषस्य भूमौ ऊर्ध्वस्थित्याऽपि, (३) तथा आसीने कूर्चाद्यासनविशेषैः, तत्सर्वं अस्मिन् ग्रंथे अन्येषु च ग्रंथेषु नोक्तं, अत्र च मया विस्तरभिया न प्रपञ्चितं स्वयमूह्यम् ॥–करणसंसिद्धये स्त्रीणां पुरुषाणां च लाघवाङ्गवलनशक्त्यादिकमपेक्ष्यते तेन शरीरस्थौल्ये मंदभावत्वे वा करणानामप्रवृत्तिः ॥–अपि च पुरुषेभ्यः स्त्रीणामेव स्नेहातिरेको वर्तते, तदुक्तं भारते अनुशासनपर्वणि–"स्त्रियास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै ।" (१२।४७) इति, (स्नेहः मानसिको रतिविषयकश्च, यथोक्तं–"स्त्रीणां द्विगुण आहारो, लज्जा चापि चतुर्गुणा । साहसं षड्गुणं चैव, कामश्चाष्टगुणः स्मृतः ॥" इति; उक्तं वराहमिहिरेणापि बृहत्संहितायां (७३।१४)–"न

* यदङ्गुलीनां प्रविधाय कुञ्चनं
चतसृणामेव करोति मस्तके।
अनल्पतात्कारनिनादि ताडनं
स्मृतं विदग्धैरिह शब्दकर्तनम्॥ १॥

यत् चतसृणामेव अंगुलीनां, कुंचनं संकोचं, विधाय, मस्तके स्त्रीमंस्तके, पुरुषः करोति, न अल्पं अनल्पं, टात्कार इति टात्वर्णात् स्वरूपे कारतकारौ, निनादि शब्दकारि, यत्ताडनं, मैथुनासनं (?) तत्, बुधैः पण्डितैः शब्दकर्तरि नाम स्मृतम्॥ १॥

आबद्धमुष्ट्या यदि मुष्टिसंज्ञं
श्रोणीतटे पृष्ठतले विधेयम्॥

पा०—*अस्य परिच्छेदस्य प्रथमः सार्धश्लोकः लेखकप्रमादात् पृष्ठसंभ्रमाद्वा पुस्तकद्वयेऽपि अष्टाविंशतिपरिच्छेदस्य आरंभे पठितः व्याख्यातश्च॥ अथ च पुस्तकद्वयेऽपि द्वितीयश्लोकोत्तरार्धस्य पूर्वं ३७ परिच्छेदस्य आदित अष्टौ श्लोका निवेशिताः। तत्सर्वमत्र समीकृत्य स्वस्वस्थले नियोजितम्॥ अनल्पटात्कार (टी. पा)। स्मृतं विधिज्ञैरिह शब्दकर्तरि। (स. पु.)॥ १॥ परि० ३३॥

शतेनापि वर्षाणामपैति मदनाशयः। तत्राशक्त्या निवर्तन्ते नरा, धैर्येण योषितः॥" इति। (अनेन स्त्रीणामभिलाषशीलताप्राधान्यं दर्शितमिति भट्टोत्पलः॥) "स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा।" (म.भा.) (१२।५२) (अधिका पुरुषगतस्त्रीसंयोगप्रीतेः इति भावः।) इति च॥ तथा स्त्रीकृतपुरुषलालनात् पुरुषकृतस्त्रीलालनस्य प्रमाणे आधिक्यं वर्तते, तथाहि तत्रैव उभयदैहिकानुभवसंस्कारवतो भंगास्वनस्योक्तिः—"रमिताऽभ्यधिकं स्त्रीत्वे सत्यं वै देवसत्तम।" (१२।५३) इति। ततः सुरते पुरुषात् स्त्री एव अधिकानंदभागिनी इति फलितम्। अत एव भंगास्वनेन इन्द्रात् वरदानसमये स्त्रीत्वमेव प्रार्थितं, "एतस्मात्कारणाच्छक्र स्त्रीत्वमेव वृणोम्यहम्।" (१२।५२) इत्युक्त्या॥ इति दिक्॥ इति द्वात्रिंशः॥ (॥ ३२॥)

टी०—अत्र कामयुद्धाङ्गानां कामोद्दीपकानां नायिकासीत्कृतादिकारणानां रागास्पदेषु ताडनानां प्रहणनाख्यानां प्रकारानाह। रागास्पदानि च—"पृष्ठपार्श्वजघनस्तनान्तरे मूर्ध्नि, ते हि मदनस्य भूमयः।" (र. र. १०।५३) इति॥ कुंचनं प्रविधाय 'फणाकारं' कृत्वा। मस्तके इति तस्य रागास्पदेषु प्रथमत्वात्। शब्दकर्तनं कामसूत्रादिषु 'प्रसृतकं' इति नाम्ना प्रसिद्धम्। अस्य प्रयोगे नायिकाया अंतर्मुखकूजितं सीत्कृतं च प्रजायेते (र. र. प्र.)॥१॥ मुष्टिप्रयोगे—"तत्र सासूयाया इव स्तनितरुदितकूजितानि, प्रतीघातश्च स्यात्।"

गण्डे पदाङ्गुष्ठतलेन हन्या-
तदा बुधा विद्धकमामनन्ति ॥ २ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे–ताडनानि त्रीणि–
त्रयस्त्रिंशः परिच्छेदः ॥ ]

श्रोणीतटे पृष्ठतले आबद्धमुष्ट्या मुष्टिसंज्ञं विज्ञेयम् ॥ गण्डे गण्डस्थले, पदाङ्गुष्ठतलेन हन्यात्, तदा बुधाः पण्डिताः, विद्धकं आमनन्ति कथयन्ति ॥ २ ॥

ताडनानि त्रीणि ॥ ३ ॥

---

आदाय मुष्ट्या परिमर्दनं य-
त्तदुक्तमादीपितनामधेयम् ॥
स्पृष्ट्वा यदा हस्ततलेन विद्धं
तदोच्यते स्पृष्टकमग्रधीभिः ॥ १ ॥

---

पा०—°दुक्तमोदोपि च (बी) (अक्षरभ्रमोत्थः पाठः) । यस्ततलेन (बी) । तत्रोच्यते (स. पु.) । पृष्टक० (बी) ॥ १ ॥

---

इति कामसूत्रं (२।१), स्तनितं कूजितं रुदितं च प्रतिपातं (र. र. प्र.) नायिकानुभावाः ॥ विद्धकमन्यत्र नोपलब्धम् ॥ २ ॥ कामसूत्रादिषु अन्ये द्वे अधिके उक्ते, ते च युक्तयंत्रायाः स्तनान्तरे प्रसृतांगुलिना हस्तपृष्ठेन (यत्र हस्तरेखा भवंति तेन) ताडनं 'अपहस्तकं,' येन हिंकार उद्भवति तत्; तथा पार्श्वे जघने (गुह्ये) च युक्तयंत्रायाः कपोले मस्तके च प्रयोज्यं हंसकोकिलकारंडकूजितजनकं अन्वर्थनामकं 'समतलकम्' इति च ॥ दाक्षिणात्यानां तु मुष्टिविशेषभूतानि–उरसि 'कीला', शिरसि 'कर्तरी,' कपोलयोः 'विद्धा,' स्तनयोः पार्श्वयोश्च 'संदंशिका' इति चतुर्धा प्रहणनानि तत्रोक्तानि, तद्विस्तरस्तत्रैव द्रष्टव्यः ॥ अपि च अनंगरंगे (१०।४२-४४) अपराणि अंगनाकृतानि चत्वारि हस्तताडनानि उक्तानि । तत्र विपरीतरते पतिहृदये मुष्टिताडनं 'संतानितं' इति, (अस्यैव 'संताडितं' इति नाम पंचसायके ।) विस्तीर्णहस्तेन निर्वृत्तं तत् 'पताकं' इति, अंगुष्टमात्रेण कृता आघाताः विद्धकप्रतिरूपाः 'बिंदुमाला' इति, अंगुष्ठमध्यांगुलिकाप्रहारः 'कुंडलं' इति च ॥ इति त्रयस्त्रिंशः ॥ (॥ ३३ ॥)

टि०—एतत्परिच्छेदगतो विषयोऽन्यत्राचुंबितः ॥ मर्दनमधिकृत्य–"दधिचंदनतांबूलं कुचौ कार्पासमैथुने । इक्षुदंडास्तिला मूर्खा मर्दनं गुणवर्धनम् ॥" इति सुभाषितम् ॥ मर्दनस्थानानि उक्तानि स्मरदीपिकायां–" भुजयोः स्तनयोश्चैव भगे नाभौ तथैव च । षट्सु स्थानेषु विधिना मर्दनं परिकीर्तितम् ॥ " इति ॥ (कुचमर्दनं तस्य करेण चक्री-

आदाय गृहीत्वा, यत् मुष्टया परिमर्दनं, तत् आदीपितनामधेयं, उक्तं कथितम् ॥ स्पृष्ट्वा यत् हस्ततलेन विद्धं मर्दनं, तत्, अग्रधीभिः पण्डितैः स्पृष्टकं उच्यते ॥ १ ॥

आकम्पमानेन करेण यच्च
मनीषिभिः कम्पितकं तदुक्तम् ॥
इतस्ततो यत्र निपीडमात्रे(त्रं)
मतं मुनीन्द्रेण समाक्रमाख्यम् ॥ २ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे—मर्दनानि चत्वारि—
चतुस्त्रिंशः परिच्छेदः ॥ ]

आकम्पमानेन, करेण हस्तेन, यत् मर्दनं, तत्, मनीषिभिः बुधैः, कम्पितं उक्तम् ॥ इतस्ततः, निपीड्यमात्रे( ने ? ) निपीडने, मुनीन्द्रेण, समाक्रमाख्यं कथितम् ॥ २ ॥

मर्दनानि चत्वारि ॥ ४ ॥

---

यः सर्वगात्रेषु दृढं करेण
ग्रहस्तदा तं वद बद्धमुष्टिम् ॥
संवेष्ट्य यत्राङ्गुलिकां कचेन
वदन्ति तद्वेष्टितकं मुनीन्द्राः ॥ १ ॥

यः पुरुषः, सर्वगात्रेषु दृढं यथा स्यात्, करेण, ग्रहः ग्रस्तं, तदा तं बद्धमुष्टिं वद ॥ कचेन केशेन, यत्र सुरते, अङ्गुलिकां संवेष्टय, तत् मुनीन्द्राः वेष्टितं वदन्ति ॥ १ ॥

---

पा०—आकल्पमानेन…कल्पितकं ( बी ) । निपीड्यमात्रे(ने ?) (स. पु.) ॥२॥
पा०—परि० ३५—यत्पूर्वगात्रेषु (बी.) यत्राङ्गुलिकं ( बी ) ॥ १ ॥

---

करणम् ॥ ) स्त्रीणां 'कामश्चाष्टगुणः स्मृतः' इति सिद्धान्तेन ताडनमर्दनाङ्गुलिप्रवेशानामुपदेशा इति विज्ञेयम् । ताडनादिकं च बालेतरासु मंदवेगेतरासु च प्रयोज्यम् ॥ इति चतुस्त्रिंशः ॥ ( ॥ ३४ ॥ )

टि०—अत्रोक्तानां ग्रहणानामपि नान्यत्र वर्णनम् ॥ 'वेष्टितकं' कचग्रहणप्रकारः ॥ १ ॥

संग्रथ्य वामाङ्गुलिकाग्रहश्च
स्मृतं कृतग्रन्थिकनामधेयम् ॥
कण्ठे स्तनेऽङ्गुष्ठकतर्जनीभ्यां
तदा समाकृष्टिमुदाहरन्ति ॥ २ ॥

इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे–ग्रहणानि चत्वारि–
पञ्चत्रिंशः परिच्छेदः ॥

संग्रथ्य, वामाङ्गुलिकाग्रहः ग्रहणं, कृतग्रन्थिकनामधेयं स्मृतम् ॥ कण्ठे, स्तने, अङ्गुष्ठतर्जनीभ्यां ग्रहणं, तत् आकृष्टिं बुधाः उदाहरन्ति ॥ २ ॥ ग्रहणानि चत्वारि ॥ ४ ॥

---

प्रवेश्यते तर्जनिका वराङ्गे
प्रवेशनं तत्करणं वदन्ति ॥
सा मध्यमापृष्ठगता यदा स्यात्
विदुर्विदग्धाः कनकाभिधानम् ॥ १ ॥

वराङ्गे योनौ, तर्जनिका प्रवेश्यते, तत् प्रवेशनं करणं वदन्ति ॥ सा तर्जनी मध्यमापृष्ठगता चेत्, तदा, विदग्धाः बुधाः, कनकाभिधानं विदुः ॥ १ ॥

---

पा०–संग्रन्थ्य (बी) स्मृतः······नामधेयः (बी)। बुधास्तदाकृष्टि० (स.पु.)॥२॥

---

टि०—पूर्वार्धे हस्तग्रहणप्रकारः । नारीहस्ताङ्गुलिकासु स्वाङ्गुलीः संग्रथ्य ग्रहणं 'कृतग्रंथिकं' नाम ॥ 'समाकृष्टिः' 'चीमटा' इति 'चुंटिउं' इति वा भाषायां प्रसिद्धम् ॥ २ ॥ इति पंचत्रिंशः ॥ (॥ ३५ ॥)

टि०—अंगुलिप्रवेशाः कृत्रिमलिंगस्थानीया अन्यत्र न प्रपंचिताः ॥ मंदभावानां वामानां रत्युद्दीपनाय, विपरीतरतेन श्रान्तानामप्यतृप्तानां तुष्टिजननाय, चंडभावानां अंतर्नाडीसंक्षोभेण द्रावणाय च, इदं अंगुलीरतं प्रयुज्यते । उक्तं च रतिरहस्ये–"तृप्तिमेति यदि नैवमप्यसावाचरेद्रदितमंगुलीरतम् ।" (१०।५०) इति, "निवसति भगमध्ये नाडिका लिंगतुल्या मदनगमनदोला द्व्यंगुलक्षोभिता सा । सृजति मदजलौघं" (१०।६) इति च ॥ तथाहि स्मरदीपिका–"अंगुलीनां प्रवेशैस्तु तथा कृत्रिमलिंगकैः । मृदुहस्तध्वजः कामी रमेत् स्त्रीतोषहेतवे ॥" इति ॥ एतत्कृत्ये नखानां ह्रस्वत्वमपेक्षितं, अन्यथा भगाभ्यन्तरे क्षतेन पीडा रोगोद्भवो वा स्यात् ॥ सा तर्जनी ॥ १ ॥

तयोर्द्वयोः पृष्ठविपर्ययेण
वदन्ति धीरा विकनं तदेव ।
तते तु ते द्वे कथिता पताका,
तिस्रः सहानामिकया त्रिशूलः ॥ २ ॥
श्लिष्टा यदा ताः शनिभोगमाहुः ॥ २१/४ ॥

इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे–अङ्गुलिप्रवेशाः ( षट् )–
षट्त्रिंशः परिच्छेदः ॥

तयोः द्वयोः तर्जनीमध्यमयोः, पूर्वोक्तपृष्ठविपरीतेन, तदेव, धीराः पण्डिताः विकनं वदन्ति ॥ ते द्वे तटे( ते ) विस्तृते पताका ॥ अनामिकया सह तिस्रः त्रिशूलः ॥ २ ॥ ताः तिस्रः अङ्गुलयः श्लिष्टाः ( अ )विरलाश्चेत् शनिभोगमाहुः ॥२१/४॥

---

*इति सुरतमनेकभेदभिन्नं
स्फुटमुदितं परिहृत्य फल्गु वाक्यम् ।
त्रिविधमृगदृशां स्वरूपवेदि
मृदुखरमध्यमकर्म योक्तुमेतत् ॥ १ ॥

---

पा०—परि० ३६–विकलं तदैव ( बी. )। तटे तु ते द्वे ( स. पु. ) ॥ २ ॥ श्लिष्टा यदा···माहुः इति बी. पुस्तके नास्ति ॥ २१/४ ॥

पा०—* इतः आरंभश्लोकाष्टकं पुस्तकद्वयेऽपि लेखकस्य पृष्ठसंभ्रमात् ३३ परिच्छेदे आद्यसार्धश्लोकस्थले लिखितं वर्तते ॥ तेन अस्य नवमः श्लोकः बी. पुस्तके एकाङ्केन चिह्नितः ॥ स्वरूपवेदी (स. पु; बी) । कर्मजोक्तमे० (बी.) ॥ १ ॥

---

टि०—विकनं विकनकम् ॥ २ ॥ अंगुलिप्रवेशस्य अन्ये भेदाः 'करिकरः' 'फणिभोगः' 'अर्धेन्दुः' 'कामांकुशः' इत्याद्याः सारल्येनोहितुं शक्यत्वान्नोक्ताः । तत्र " तर्जन्यनामिका युक्ते मध्यमा पृष्ठतो यदि । करिहस्त इति प्रोक्तः कामशास्त्रविशारदैः ॥ " इति करिकरस्य लक्षणम् ॥ सर्वेष्वङ्गुलिप्रवेशभेदेषु मदनच्छत्रस्य पायोर्वा अंगुष्ठेन पीडनं यथारुचि कार्यम् ॥ एवं कामपीडाशान्त्यर्थं दीर्घवृन्ताकादिकं सिक्थवर्त्यादिकं उचितापद्रव्यं प्रयुज्यते ॥ अनेन परिच्छेदेन सुरतवर्णनस्य समाप्तिः ॥–तत्र सुरताङ्गेषु अन्यत्र नोक्तं **रसपानं** स्मरदीपिकायामुक्तं–" पयोधरौष्ठास्यजिह्वा द्वयोरेव कुचाग्रयोः । पंचस्थानस्य वै पानं कुर्यात् क्रीडाविचक्षणः ॥" इति ॥ इति षट्त्रिंशः ॥ ( ॥ ३६ ॥ )

टि०—अस्मिन्परिच्छेदे श्रीदामोदरगुप्तकविविरचितकुट्टनीमताख्यकाव्यस्य भागविशेषमवलंब्य नायकहृदयावर्जकं वामाचरितं प्रकाशितम् ॥ इतीति । इति पूर्वोक्तप्रकारेण

इति अनेन प्रकारेण, अनेकभेदभिन्नं सुरतं, स्फुटं व्यक्तं, उदितम् । किं कृत्वा ? फल्गु वाक्यं परिहृत्य । त्रिविधमृगदृशां स्वरूपवेदी पुरुषः, एतत् मृदुखरमध्यमकर्म योक्तुं योजनाकर्तुं कार्यम् । मृदु कोमलं, खरः तीक्ष्णं, मध्यमो मृदुखरसहितः । मृदु च खरश्च मध्यमश्च तत् मृदुखरमध्यमकर्म । स्त्रीभेदेन प्रयोगः कार्यः ॥ इति करणपरिपाटी षोडश ॥ १६ ॥

**हर्तुं हृदयसर्वस्वं यदीच्छेद्भर्तुरङ्गना ।**
**तदा विदग्धकामानामित्याचरितमारभेत् ॥ २ ॥**

अङ्गना स्त्री । भर्तुः स्वामिनः, यत् हृदयसर्वस्वं कर्तुमिच्छेत्, तदा विदग्धकामानां पुरुषाणां इति आचरितं आरभेत् ॥ २ ॥

**कौशलं (कोमलं?) धूपितं धौतं वस्त्रमग्राम्यमण्डनम् ।**
**दधानाऽऽपीडसद्वेषं, ~~वर्तिः~~ भूयः प्रियान्तिके—॥ ३ ॥**
**( दधाना, पीतसद्धूपवर्तिर्भूयात् प्रियान्तिके ॥ ? )**

प्रियान्तिके स्वामिनिकटे, ~~वर्तिः~~ निकटवर्तिः, स्त्री भूयात् । कथंभूता स्त्री ? कौशलं कुशलयोग्यं, धूपितं सुधूपितं, अग्राम्यमण्डनं ग्राम्यमण्डनशून्यं, धौतवस्त्रं दधाना ॥ ३ ॥

---

**पा०—कर्तुं** हृदय⋯यदिच्छे० ( स. पु. ) ॥ २ ॥ धौतं वस्त्रं स्रग्गन्धमण्डनम् ( बी० ) । **पीतसद्वेषं वर्तिर्भूयात्प्रियान्तिके** ( स. पु. ) ॥ ३ ॥

---

एकविंशतिपरिच्छेदमारभ्य षोडशभिः परिच्छेदैः । अनेकभेदभिन्नं सोपभेदं बाह्यमाभ्यन्तरं चेति द्विविधम् । फल्गु तुच्छं गांभीर्यरहितम् । त्रिविधमृगदृशां हरिण्याद्यानां बालाद्यानां वा । वेदि वेदयितृ । मृद्विति बहुव्रीहिसमासः, बालायाः हरिण्या वा विषये मृदु अपीडाकरं कर्म चुंबनादिविधानं, एवं तरुण्याः वडवाया वा मध्यमं, प्रौढाया हस्तिन्या वा खरं तीक्ष्णं दृढं निःश्वासरुदितादिजनकं, कर्म यस्मिन् तत् । एतत् सुरतं, योक्तुं प्रयोक्तुम् ॥ १ ॥

**टि०—**विदग्धकामानां विदग्धः कौशलयुक्तः कामः अनुरागः यासां तासाम् । अत्र '**विदग्धवामानां**' इति समीचीनः पाठः स्यात्, चतुरस्त्रीणां इति च तदर्थः ॥ २ ॥ कोमलमित्यादि युग्मम् । कोमलं मृदु श्लक्ष्णं, धूपितं सुगंधधूपादिना अधिवासितं, धौतं निर्मलीकृतम् । यथास्थितपाठे आपीडसद्वेषं आपीडेन मूर्ध्नितिर्यक्स्थितया स्रजा शोभनं वेषं वस्त्रादिकं, अत्र '**पीतसद्धूपं**' इति पाठः कुट्टनीमतानुसारी भवेत् । अयं श्लोकः कुट्टनीमतस्थायाः १४९ आर्यायाः अनुवादः, सा च "मृदुधौतधूपिताम्बरमग्राम्यं मंडनं च बिभ्राणा । परिपीतधूपवर्तिः स्थास्यसि रमणान्तिके सुतनु ॥" इति । एवमग्रेऽप्यापरिच्छेदान्तम् । एतेषां व्याख्यानं मत्कृतकुट्टनीमतदीपिकायां तत्रतत्र गतार्थम् ॥ ३ ॥

ससाध्वसं च सस्नेहं सव्रीडं सहसं तथा ।
ईषद्दृश्यतनुर्नारी वसेत्कान्तं निरन्तरम् ॥ ४ ॥

ईषद्दृश्यतनुः नारी, कान्तं, सुनिर्भरं यथा स्यात्तथा जयेत्, ससाध्वसं सस्नेहं सव्रीडं सहसं च जयेदित्यर्थः ॥ ४ ॥

आकर्षति पुनस्तस्मिन् रतानीकरते प्रिये ।
जनयेदङ्गसंकोचं क्षणं साक्षाद्भयादिव ॥ ५ ॥

तस्मिन्, रतानीकरते रतस्य अनीकरते समूहरते, प्रिये कान्ते, आकर्षति सति, तदा अङ्गसंकोचं, क्षणं व्याप्य जनयेत्, कस्मादिव ? साक्षाद्भयादिव ॥ ५ ॥

प्रक्रान्ते सुरते पश्चात् क्रमाविर्भूतमन्मथा ।
निःशङ्कमर्पयेद्गात्रमतिस्नेहादिव प्रिये ॥ ६ ॥

प्रिये कान्ते, सुरते, पश्चात् क्रमाविर्भूतमन्मथा परिश्रमाभिभूतकामा, स्त्री, यद्गात्रं निःशङ्कभूतं अतिस्नेहादिव ॥ ६ ॥

यद्यत्समीहते द्रष्टुं हन्तुं वा लिखितुं वपुः ।
तत्तदापसरेच्छीघ्रं सोद्वेगं, ढौकनीयं च ॥ ७ ॥

यद्यद्वपुः द्रष्टुं समीहते, हन्तुं लिखितुं वा समीहते, तदा तद्वपुः शीघ्रं अपसरेत् दूरीकरणीयं सोद्वेगं यथा स्यात्तथा, पुनः ढौकनीयं प्रदेयम् ॥ ७ ॥

---

**पा०**—सव्रीडमसहं ( बी )। तनुर्नारीजयेत्कान्तं सुनिर्भरम् ( स. पु. ) ॥ ४ ॥ क्षणं लज्जाभयादिव ( बी ) ॥ ५ ॥ क्लमाभिभूतमन्मथा ( स. पु. ) (अक्षरभ्रमोत्थः पाठः )। निःशङ्कभूतं यद्गात्र० ( स. पु. ) ॥ ६ ॥ तत्तत्प्रसारयेच्छीघ्रं तदङ्गं ढौकनीयवत् ( बी. ) । ढौकनीयकम् ( स. पु. ) ॥ ७ ॥

---

**टि०**—ससाध्वसमित्यादिपदानां पूर्वश्लोकस्थितवर्त्तीतिपदेनान्वयः । सहसं सस्मितम् । ईषद्दृश्यतनुः कामसंधुक्षणार्थं प्रकटिताप्रकटितकुचाभोगजघननाभिमंडलादिशरीरावयवा । अत्र कुट्टनीमते १५० आर्या ॥ ४ ॥ अनीकं युद्धं, रतानीकं सुरतयुद्धं, यथोक्तं रहिरस्ये ( १०।९३ ) "मोहनं मदनयुद्धमूचिरे ।" इति । ( मोहनं सुरतम् । ) रते आसक्ते । अत्र कु. म. १५२ आर्या ॥ ५ ॥ क्रमेण न तु सपदि शनैःशनैरिति यावत् । अत्र कु. म. १५३ आर्या ॥ ६ ॥ हंतुं ताडनेन पीडयितुम् । लिखितुं नखरैः इति शेषः । अपसरेत् अंतर्भावितण्यर्थः प्रयोगः, अपसारयेत् इत्यर्थः । सोद्वेगं निःसहतां दर्शयितुम् । 'सावेगं' इति पाठः कुट्टनीमतानुकूलो भवेत् । ढौकनीयं संमुखं नेयम् । अत्र कु. म. १५४ आर्या ॥ ७ ॥

कुर्यात्कूजितमामर्दे, दंशे सव्यथहुंकृतिम् ।
नखक्षतेषु सीत्कारमाघाते स्तनितं स्फुटम् ॥ ८ ॥

आमर्दे मर्दने, कूजितं शब्दं कुर्यात् । दंशे दन्तदंशे, सव्यथं व्यथासंयुक्तं, हुंकारं कुर्यात् । नखक्षते स्तनगण्डयोः आघाते शी(सी)त्कारं कुर्यात् ।

प्रस्विन्नवदना श्रान्ता मन्दहाकारनादिनी ।
आयासश्वासरोमाञ्चं मुञ्चेत्तद्रागवृद्धये ॥ ९ ॥

प्रस्विन्नवदना स्वेदार्द्रमुखा, श्रान्ता परिश्रमार्ता, मन्दहाकारशब्दकारिणी, आयासं च श्वासं च रोमाञ्चं च मुञ्चेत्, तद्रागवृद्धये सुरतरागवृद्धये ॥ ९ ॥

मा मां निपीडयात्यर्थं न समर्थाऽस्मि निर्दय ।
इत्येवं गद्गदाव्यक्तं प्रियं ब्रूयान्नितम्बिनी ॥ १० ॥

नितम्बिनी स्त्री, इत्येवं गद्गदाव्यक्तं यथा स्यात्, प्रियं स्वामिनं, ब्रूयात्; इति किम् ? हे निर्दय, अत्यर्थं अतिशयेन, मां मा निपीडय अहं न समर्थाऽस्मि ॥ १० ॥

वामत्वमनुबन्धं च प्रौढत्वमसमर्थता(म्) ।
कान्ताकूतं स्फुटं ज्ञात्वा सुरतेषु प्रदर्शयेत् ॥ ११ ॥

कान्तस्य, कूटं कपटं, स्फुटं यथा स्यात् तथा ज्ञात्वा, सुरतेषु प्रदर्शयेत्, तत्किं ? वामत्वं प्रातिकूल्यं, अनुबन्धं अनुरागं च, प्रौढत्वं नायकत्वं, असमर्थता च ॥ ११ ॥

धीरताविनयोच्छेदमश्लीलमसमञ्जसम् ।
वृद्धिं याते रतावेगे व्यवहारं समारभेत् ॥ १२ ॥

रतावेगे सुरतभावे, वृद्धिं याते सति, तदा व्यवहारं समारभेत् । को वा व्यवहारः ? धीरतां विनयोच्छेदं विनयभङ्गं, अश्लीलं कदर्यं, असमञ्जसं अयोग्यम् ॥ १२ ॥

---

पा०—शीत्कारं ( स. पु. ) । ˚घाते स्तनगण्डयोः ( स०पु० ) ॥ ८ ॥ ˚मनुबन्धत्वं ( बी. ) । कान्तकूतं ( बी. ) कान्तकूटं ( स. पु. ) ॥ ११ ॥ धीरतां विन० ( बी; स. पु. ) ॥ १२ ॥

---

टि०—कूजितं कंठरसितं, अत्रैव पूर्वं ( २१।२ ) उक्तं, आमर्दे मर्दने (परि० ३४) । दंशे ( २३ परि० ) दंतक्षतेषु, हुंकृतिं हिंकारं ( २१।४ ) । नखक्षतेषु ( परि० २२ ), सीत्कारम् ( २१।३ ) । आघाते ( परि० ३३ ) ताडनेषु, स्तनितम् ( २१।१ ) । अत्र कु. म. १५५ आर्या ॥ ८ ॥ अत्र कु. म. १५६ आर्या ॥ ९ ॥ असमर्था रतिश्रांत्या ताडनपीडनादिकं सोढुमशक्ता । अत्र कु. म. १५८ आर्या ॥ १० ॥ वामत्वं प्रतिकूलतां, अनुबंधत्वं आनुकूल्यं नायककर्मसु । प्रौढत्वं प्रागल्भ्यम् । कूतं आकूतं अभिप्रायं भावम् । अत्र

शिथिलाङ्गी निरुत्साहा सन्निमीलितलोचना ।
प्र(नि ?)वृत्ते मोहने तिष्ठेत् स्वेदबिन्दुकणाचिता ॥ १३ ॥

मोहने मोहनसुरते प्रवृत्ते, एवंविशिष्टा तिष्ठेत् । एवं किं ? शिथिलाङ्गी, निरुत्साहा आनन्दवर्जिता, संनिमीलितलोचना, स्वेदबिन्दुकणाचिता व्याप्ता ॥ १३ ॥

नितम्बाच्छादितं शीघ्रं वैलक्ष्यं ललितं स्मृ(स्मि ?)तम् ।
दृष्टिं खेदालसां कुर्याद्व्यक्तकेशविभूषणा ॥ १४ ॥

वैलक्ष्यं, शीघ्रं नितम्बाच्छादितं नितम्बं आच्छादितं नितम्बाच्छादितं, ललितं स्मृतं; खेदेन परिश्रमेण, अलसां दृष्टिं कुर्यात्, व्यक्तकेशविभूषणा ॥ १४ ॥

वात्स्यायनादिरचितं विशरीरशास्त्रं
यद्दृश्यते मृगदृशां मृदुतानिमित्तम् ।
सीमन्तिनीपुरुषयोरुभयोरिदं तु,
स्त्रीसेवनोत्कठिनता नियता हि लोके ॥ १५ ॥

विशरीरशास्त्रं—विगतं शरीरं यस्य स विशरीरः कामः, तस्य शास्त्रं विशरीरशास्त्रं; सीमन्तिनीपुरुषयोरुभयोर्निमित्तं यद्वात्स्यायनादिरचितं दृश्यते, तत्, मृगदृशां

---

पा०—स्मृतम् (बी; स. पु.) ॥ १४ ॥ °नादिरुचिरं (बी.) ॥ १५ ॥

---

कु. म १५९ आर्या ॥ ११ ॥ धीरतायाः धैर्यस्य अचापलस्य शीलानुलंघनस्य, विनयस्य वाक्क्रियासु नियंत्रितत्वस्य च, उच्छेदं विनाशं अभावमिति यावत्, तेन चाञ्चल्यं उच्छृंखलतां च, इत्यर्थः । अत्र कु. म. १६० आर्या ॥ १२ ॥

टि०—सुरतान्तकृत्यमाह शिथिलांगीतिद्वाभ्याम् । शिथिलांगी स्रस्तगात्रा, निरुत्साहा सालसा । 'प्रवृत्ते' इति पाठे प्रकर्षेण वृत्ते समाप्ते । उक्तं च रतिरत्नप्रदीपिकायां (अ. १८)—"अथ संभोगजनिता भावसंप्राप्तिरुच्यते । देहे पुलकसंभूतिरंगेषु स्रस्तताऽपि च ॥ अक्ष्णोर्निमीलनत्वं च कपोले स्वेदसंभवः । मार्दवं मदनागारे भावाधिगमसूचकम् ॥ विधूननं च करयोः कांतोक्तात्रसहिष्णुता । पादपृष्ठेन हननं पुरुषाक्रमणस्तथा ॥" इति । अत्र कु. म. १६१ आर्या ॥ १३ ॥ वैलक्ष्यं आत्मनश्चरितेऽन्येन ज्ञाते या महती अपत्रपा सा, लज्जातिरेकः । ललितं सुंदरम् । खेदालसां सुरतश्रमेण मुकुलिताम् । व्यक्तेति सुरतसंरंभेण वस्त्रापगमो लक्ष्यते । अत्र कु. म. १६२ आर्या ॥ १४ ॥ विशरीरः अनंगः कामदेवः तस्य शास्त्रं कामशास्त्रम् । तस्य प्रयोजनमाह मृगेत्यादि । मृदुतायाः तृप्तिजनितशिथिलतायाः । इदं कामशास्त्रं स्त्रीपुंसयोः साधारणमपि, लोके स्त्रीसेवनस्य तदुपभोगस्य लक्षणया उपभोगफलस्य तृप्तेः, उत्कठिनता दुष्करता, नियता नियमेन वर्तमाना ॥ १५ ॥

स्त्रीणां, मृदुतानिमित्तं कोमलनिमित्तं, हि निश्चितं, लोके स्त्रीसेवनोत्कठिनता नियता कथिता ॥ १५ ॥

तत्कुट्टिनीमतमुदीक्ष्य वराङ्गनानां
कान्ते विधेयमबलाचरितं प्रदिष्टम् ।
स्त्रीसौख्यलिङ्गमवधारयतां नराणां
चोक्तं स्वरागजननं सुतरामिहैव ॥ १६ ॥

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे--वामाचरितप्रकाशो नाम--सप्तत्रिंशः परिच्छेदः ॥ ]

कान्तैः पुरुषैः, कुट्टिनीमतं कोमलमतं, उदीक्ष्य प्रेक्ष्य, वराङ्गनानां तद्विधेयं अबलाचरितं प्रदिष्टं; स्त्रीसौख्यलिङ्गं अवधारयतां नराणां, इहैव, स्वरागजननं स्वस्य अनुरागं, सुतरां अत्यर्थेन, उक्तं कथितम् ॥ १६ ॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां वामाचरितप्रकाशो नाम सप्तदशः परिच्छेदः ॥

---

सुतार्थे बद्धचिन्तानामपुत्राणां मनोर्भुवाम् ।
हिताय करुणासिन्धुः कथयामि सुतोदयम् ॥ १ ॥

सुरताबद्धचित्तानां अपुत्राणां मनोभुवां पुरुषाणां, हिताय, सुतोदयं सुतोत्पत्तिं कथयामि, कथंभूतोऽहं ? करुणासिन्धुः ॥ १ ॥

---

**पा०**—तत्कामिनीमत० (बी.) । कान्तैर्विधेय० (स. पु.) । नराणां व्यक्तं (बी) ॥ १६ ॥

**पा०**—परि.३८–सुरताबद्धचित्ताना०(स.पु.)। मनोभुवाम्(स.पु; बी) ॥ १ ॥

---

**टि०**—तत् तस्मात्, कुट्टनीमतं काश्मीरिकदामोदरगुप्तकविविरचितं निदर्शनं काव्यं, ( यस्य टीका दीपिकाख्या मया एतट्टिपणकृता विरचिता, ) उदीक्ष्य अवलोक्य । प्रदिष्टं कथितं, अन्यत्र एतद्गतविषयस्य अभावात् इति भावः ॥ अपि च अत्रैवोक्तरीत्या, सौख्यलिंगं तृप्तिचिह्नानि, अवधारयतां निश्चितज्ञानविषयं कुर्वतां, स्वरागजननं स्त्रीतृप्तिदर्शनेन स्वेषां पुरुषाणां प्रीत्युत्पादकं इत्यर्थः, "क्लेशः फलेन हि पुनर्नवतां विधत्ते ।" ( कु.सं.५।८६) इति न्यायेन । इहैव अस्मिन्परिच्छेदे ॥१६॥ इति सप्तत्रिंशः ॥ (॥३७॥)

**टि०**—वंशकरत्वात् पिंडदानेन प्रेतावस्थामोचकत्वात् सुरतश्रमस्य फलत्वाच्च पुत्रजन्मनः अभिलषणीयतया, सत्सु आधिदैविकप्रतिबंधेषु तद्दूरीकरणसमर्थान् मंत्रौषधिप्रयो-

**रजःस्नानदिने दत्त्वा भिक्षुसंघातभोजनम् ।**
**शक्तितो दक्षिणां दत्त्वा प्रार्थयेद्वरमीप्सितम् ॥ २ ॥**

रजःस्नानदिने, भिक्षुसंघाय समूहाय, भोजनं दत्त्वा, यथाशक्तितः दक्षिणां च दत्त्वा, ईप्सितं वरं प्रार्थयेत् प्रार्थनां कुर्यात् ॥ २ ॥

**तदौषधं पिबेत्कान्ता तारापूजापुरःसरम् ।**
**कान्तया सहितो रात्रौ पुत्रार्थी विधिमुच्चरेत् ॥ ३ ॥**

तदौषधिं वक्ष्यमाणौषधिं, कान्ता स्त्री, तारापूजापुरःसरं पूर्वकं पिबेत् । कान्तया सहितः, रात्रौ, पुत्रार्थी पुरुषः, विधिमुच्चरेत् ॥ ३ ॥

**समसौख्यं निरुन्मेष(षः ?) प्रयोगेषु यथा सुधीः ।**
**धैर्यवान्मोहनात्पूर्वं तारापादाम्बुजं स्मरेत् ॥ ४ ॥**

सुधीः, निरुन्मेषप्रयोगेषु अनिमीलितलोचनेषु, स्त्रीपुरुषयोः समसौख्यं, मोहनात् सुरतात् पूर्वं तारापादाम्बुजं स्मरेत् ॥ ४ ॥

**यदा सूर्येण मार्गेण देहे वहति मारुतः ।**
**संचोद्य नाडिकां पुत्रीं पश्चान्मोहनमाचरेत् ॥ ५ ॥**

यदा, सूर्येण मार्गेण पिङ्गलानाड्या, मारुतो वहति, दक्षिणश्वास इत्यर्थः, पुत्रीनामधेयां नाडिकां, संचोद्य चालयित्वा, पश्चात् मोहनमाचरेत् ॥ ५ ॥

---

**पा०—तदौषधिं (ख. पु.) ॥ ३ ॥**

---

गान् प्रायः बौद्धमंत्रशास्त्रानुसारेण अस्मिन्परिच्छेदे प्राह ॥ बद्धचिंतानां इत्यनेन नैसर्गिकरीत्या सुतोदयाभावो लक्षितः । मनोर्भुवां आदिपुरुषात् मनोः जातानां मनुजानाम् ॥ १ ॥

टि०—रजःस्नानदिने रजोदर्शनादारभ्य चतुर्थे दिने । भिक्षुसंघातः बौद्धभिक्षूणां समूहः । ईप्सितं वरं पुत्रप्राप्तिरूपम् ॥ २ ॥ तदौषधं वक्ष्यमाणं लक्ष्मणामूलं अन्यद्वा वैद्यकोक्तम् । तारा बौद्धोपास्यदेवतानामेकतमा द्वादशाक्षरी, ब्राह्मणतंत्रेषु या नीलसरस्वती इति एकजटा इति वा प्रसिद्धा, पुरा च हरिणा बौद्धमार्गप्रचारार्थं उपासिता ॥ ३ ॥ समेतिपादः अस्पष्टः । मोहनात् सुरतात् ॥ ४ ॥ सूर्येण मार्गेण दक्षिणनासापुटस्थया पिंगलाख्यया नाड्या, मारुतः प्राणवायुः श्वासो वा, वहति चलति, अर्थात् स्वरोदयशास्त्रानुसारेण दक्षिणनासापुटे वामनासापुटश्वासात् प्राणप्रवाहाधिक्यं प्रतीयते, तदा पुत्रीं नाडिकां भगस्थां इह १९ परिच्छेदे नवमश्लोके उक्तां, संचोद्य क्षोभयित्वा । मोहनमाचरेत् सुरतं कुर्यात्, तदुक्तं—
" पुत्रार्थं रमयेद्धीमान् वहद्दक्षिणनासिकम् । प्रवहद्वामनाडिस्तु कामयेतान्यदा पुनः ॥ "
( ५।२०६ ) इति विवेकविलासे । ( अन्यदा पुत्रीकामश्चेत् । ) ॥ ५ ॥

**करवीरकुसुमैर्देवीमार्यतारां वरप्रदाम् ।**
**त्रिसन्ध्यं पूजयित्वा तु मन्त्रं सप्तशतं जपेत् ॥ ६ ॥**

कुसुमैः पुष्पैः, आर्यतारां माननीयताराम् ॥ ६ ॥

**मन्त्रस्त्वयम्— ॐ जम्भे मोहय स्वाहा ॥**
**पञ्चशिष्या(क्षा ?)परो भूत्वा मासमेकं तथाऽर्चयन् ।**
**वंशोद्योतकरं पुत्रं लभते नात्र संशयः ॥ ७ ॥**

पञ्चशिष्यापदी(शिक्षापरः ?) भूत्वा, आसनमुद्राप्राणायामपूजाजपाः एवंप्रकारेण पञ्चशिक्षापरो भूत्वा, एकं मासं, अर्चयन्, वंशोद्योतकरं पुत्रं, लभते; अत्र न संशयः ॥ ७ ॥

**उषित्वा, लक्ष्मणामूलं तन्मन्त्राधिष्ठितं पिबेत् ।**
**सुरभ्या एकवर्णायाः पयसा सवली(शबली ?)कृतम् ॥ ८ ॥**

मासमात्रमुषित्वा, लक्ष(क्ष्म)णामूलं, तारामन्त्राधिष्ठितं तारामन्त्रजप्तं, एकवर्णायाः, सुरभ्याः गोः, पयसा दुग्धेन, सवली(शबलीकृतं ?) मिश्रीकृतं पिबेत् ॥८॥

---

**पा०**—सप्तशतीं (बी.) ॥ ६ ॥ °मोहे स्वाहा ( स.पु. ) ॥ °परीभूत्वा ( स. पु. ) ॥ तथार्चयेत् ( स. पु.) ॥ ७ ॥ सुरभ्या·····कृतम् ( इयं पङ्क्तिः बी. पुस्तके प्रभ्रष्टा ) ॥ ८ ॥

---

**टि०**—करवीरकुसुमैः अश्वमारकपुष्पैः भाषायां ' करेण ' इति ख्यातैः, करवीरवृक्षश्च श्वेतपीतरक्तकृष्णपुष्पभेदैश्चतुर्विधः, प्रकृते तु रक्तकरवीरपुष्पाणि ग्राह्याणि । आर्यतारां इत्यत्र आर्यविशेषणं पूजायां, यथा आर्यमंजुश्रियं ( ११ ) इत्यत्र ॥ ६ ॥ पंचशिक्षासमन्वितः टीकोक्तप्रकारेण यद्वा पंचधर्माभिज्ञः, ते च–" विविक्तदेशसेवनता, परसत्त्वाद्वेषणता, लौकिकमंत्रानिरीक्षणता, शीलश्रुतचारित्रस्थापनता च । " यैः युक्तः बौद्धमंत्रसिद्धिं साधकः प्राप्नुयात्, इति बौद्धमंत्रग्रंथेषु प्रसिद्धम् ॥ ७ ॥ उषित्वा एकदिनं उपोष्य । लक्ष्मणा—तन्नामिका ओषधिः 'पुत्रदा' इत्यपि प्रसिद्धा, भाषायां च 'रानी गुंबडवेल' 'हनुमानवेल' 'वनकलमी' इति वा ख्याता । तन्मंत्रः पूर्वोक्तः 'ॐ जंभे मोहय स्वाहा ' इति, तेन अधिष्ठितं अभिमंत्रितम् । सुरभ्याः गावः । उक्तं चान्यत्र–"पुष्योद्धृतं लक्ष्मणाया मूलं पिष्टं च कन्यया । ऋत्वंते घृतदुग्धाभ्यां पीत्वाऽऽप्नोत्यबला सुतम् ॥" इति, ( कन्या कुमारी 'कुंवाड' इति भाषायां ख्याता ओषधिः तया सह । ), " पुष्योद्धृतं लक्ष्मणाजं मूलं भर्त्रा निपेषितम् । पिबेद्घृतेन सा गर्भं धत्ते क्षीराशना ध्रुवम् ॥" इति च ॥ ८ ॥

**तदौषधिप्रभावेन शुक्रवृद्धिः प्रजायते ।**
**पिण्डाच्छुक्राधिकात्पुत्रः कन्या रक्ताधिकाद्भवेत् ॥ ९ ॥**

तदौषधिप्रभावेन, शुक्रवृद्धिः वीर्यवृद्धिः, प्रजायते । वीर्याधिकात्पुत्रः भवेत्, रक्ताधिकात् कन्या भवेत् ॥ ९ ॥

**तीर्थिको यदि पुत्रार्थी भूदेवान्भोजयेत्तदा ।**
**दक्षिणां शक्तितो दत्त्वा विदध्याद्वरयाचनम् ॥ १० ॥**

तीर्थिको, यदि कदाचित्, पुत्रार्थी, भूदेवान् ब्राह्मणान्, भोजयेत्। शक्तितः दक्षिणां दत्त्वा वरयाचनं विदध्यात् ॥ १० ॥

**फलमूलाशनो भूत्वा पार्वतीपरमेश्वरौ ।**
**त्रिसन्ध्यं पूजयित्वा तु मन्त्रमेतज्जपेत्तदा ॥ ११ ॥**

फलमूलभोजनो भूत्वा, पार्वतीपरमेश्वरौ त्रिसंध्यं पूजयित्वा, एतन्मन्त्रं जपेत् ॥ मन्त्रस्तु—ॐ नमो भगवते महेश्वराय मम प्रजाजननाय स्वाहा ॥ ११ ॥

**ॐ नमो भगवते महेश्वराय, नमः प्रजाजननाय, स्वाहा ॥**

**परदाराभिगमनं मद्यमांसादिभोजनम् ।**
**मिथ्याभिलपनं हास्यं मानं क्रोधं च वर्जयेत् ॥ १२ ॥**

मिथ्याभिलपनं मिथ्याकथनम् ॥ १२ ॥

**तदा स्नात्वा सचैलस्तु सुधौतवसनः कृती ।**
**मन्त्रमेतं जपेन्नित्यं न निद्रां समुदाहरेत् ॥ १३ ॥**

सचैलेन वस्त्रेण स्नात्वा, सुधौतवसनः, कृती, एतं मन्त्रं, नित्यं जपेत्, न निद्रां गच्छेत् ॥ १३ ॥

---

पा०—तीर्थगो (बी) । शक्तितो दद्याद्वि० (बी) ॥ १० ॥ जपेत्सदा (बी) ॥११॥ महेश्वराय मम प्रजा० (टी. पा.) । मिथ्याभिरहितं (बी) ॥ १२ ॥ **सचैलेन** ( स. पु. )। मेतज्जपे० (बी) ॥ १३ ॥

---

टि०—तदौषधेः लक्ष्मणामूलस्य । शुक्रवृद्धेः फलं पुत्रप्राप्तिरित्याह पिंडात् इति । पिंडात् देहात् । रक्तं स्त्रीरजः । तथा चोक्तं–"नारी रक्तेऽधिके, शुक्रे नरः, साम्ये नपुंसकः । अतो वीर्यविवृद्ध्यर्थं वृष्ययोगाञ्श्रयेत्पुमान् ॥" ( ५।२१२ ) इति विवेकविलासे ॥ ९ ॥ चतुर्भिः बौद्धेतराणां महेश्वरभक्तानां सुतप्राप्तये कर्तव्यमाह । तीर्थिकः ब्राह्मणः । भूदेवान् ब्राह्मणान् ॥ १० ॥ ११ ॥ मिथ्याभिलपनं असत्यभाषणं मृषावादम् ॥ १२ ॥ मंत्रं 'ॐ नमो भगवते' इत्यादिकम् ॥ १३ ॥

हेमतारकताम्राणि एकीकृत्य सुसर्पिषा ।
दातव्यं लेहनं स्त्रीणां क्षेत्रशुद्धिस्तथा भवेत् ॥ १४ ॥

हेम सुवर्णं, तारकं रजतं, ताम्रं च, एकीकृत्य, सुसर्पिषा गव्यघृतेन सह, स्त्रीणां लेहनं दातव्यं, तदा क्षेत्रशुद्धिः भवेत् ॥ १४ ॥

शेषं तु पूर्ववत्कुर्वन् कृतार्थो नियतं भवेत् ।
सत्पुत्रालोकनात्यन्तप्रीतिस्तिमितलोचनः ॥ १५ ॥

शेषं कर्म, पूर्ववत् कुर्वन्, नियतं निश्चयेन, कृतार्थो भवेत् । कथं कृतार्थः ? तदेवाह—शोभनः पुत्रः सत्पुत्रः, सत्पुत्रस्यालोकनेन अत्यन्तप्रीतिस्तया स्तिमिते लोचने यस्य सः; तथा चोक्तं स्मृतौ—"लोकं जयति पुत्रेण पौत्रेण नरकं जयेत् । अथ पुत्रस्य पौत्रेण परमानन्दमश्नुते" ॥ १५ ॥

विविधविधिविधानं देवतामन्त्रपूजा-
दयितयुवतिशिक्षासत्प्रतिग्राहकाणाम् ।
प्रथममुदितमस्मिन्वीक्ष्य सिद्धैकवीरं
परममतिरहस्यं शाङ्करं कामतन्त्रम् ॥ १६ ॥

एतत्कामतन्त्रं, परमं श्रेष्ठं, अतिरहस्यं गोपनीयं, पुनः किंभूतं ? शाङ्करं शङ्करेण कृतं, कुतः ? यतः देवतामन्त्रपूजा, द्वितयविधविधानं प्रकारद्वयविधानम्; यतः दयितयुवतिशिक्षा, सत्प्रतिग्राहकाणां शोभनजनानां, अस्मिन्शास्त्रे वीक्ष्य सिद्धैकवीरं

पा०—लेपनं स्त्रीणां (बी.) ॥ १४ ॥ °लोकमत्यन्त (बी) ॥ १५ ॥ **द्वितयविधविधानं** ( स. पु. ) । वीरमपरमति० (ने.) ॥ १६ ॥

टि०—स्त्रीयोनिरूपक्षेत्रस्य बीजधारणयोग्यतायै दोषदूरीकरणाय शुद्धयौषधमाह हेमेति । तारकं तारं रूप्यम् । स्वर्णादित्रयस्य भस्म समभागं मेलयित्वा तस्मात् रक्तिकामात्रं द्विगुंजामितं वा प्रातः घृतेन लेह्यम् । अन्यत्र तु-"रुक्मकांचनताम्राणां भस्म क्षौद्रान्वितं त्र्यहम् । लीढं पुष्पान्तके स्त्रीभिः क्षेत्रशुद्धिं परां दिशेत् ॥" इति प्रयोगः ॥ १४ ॥ कृतार्थः पुत्रप्राप्त्या सिद्धप्रयोजनः । नियतं निश्चयेन । स्तिमिते निरुन्मेषे ॥ सुतप्राप्त्यर्थं सुरते विसृष्टिकाले वा स्त्रीदक्षिणपार्श्वे नीचैः कार्यं, येन वीर्यपातो गर्भाशयदक्षिणभागे भवेत् । एतदर्थं विसृष्टिकाले वात्स्यायनोक्तं वराहघाताख्यमुपसृप्तकं प्रयोज्यम् । पुत्रीप्राप्त्यर्थं स्त्रीवामभागे पूर्वोक्तं कार्यम् ॥ १५ ॥ परिच्छेदमुपसंहरन् उक्तविधानयोः प्रामाणिकत्वनिरूपणाय तन्मूलमाह विविधेति । विधयः इतिकर्तव्यताः । उदितं निरूपितम् । सिद्धैकवीराख्यं तंत्रं बौद्धानां स्यात् । शांकरं कामतंत्रं श्रीमहेश्वरपार्वतीसंवादरूपं तंत्रम् ॥ १६ ॥

प्रथमं उदितं कथितं अर्थात् अस्मिन्शास्त्रे साधनात्सिद्धः प्रसिद्धः एकवीरः श्रेष्ठवीरो भवति ॥ १६ ॥

**आसीद्ब्रह्मकुले कलाग्रनिलयो यो वासुदेवः कृती**
**तस्य स्नेहवशाच्चिरं प्रतिमुहुः संप्रेरणात् साम्प्रतम् ।**
**दीप्तेयं रतिशास्त्रदीपकलिका पद्मश्रिया, धीमते**
**हृद्यार्थान्प्रकटीकरोतु जगतां संहृत्य हार्दं तमः ॥ १७ ॥**

यः वासुदेवः, ब्रह्मकुले ब्राह्मणकुले आसीत्, सः कथंभूतः ? कलाग्रनिलयः, पुनः कथंभूतः ? कृती पण्डितः; तस्य स्नेहवशात्, मुहुर्वारंवारं, साम्प्रतं इदानीं, पद्मश्रियो नामधेयस्य, धीमतः पण्डितस्य, इयं ~~रतिशास्त्रदीपकलिका~~ कामशास्त्रदीपकलिका, दीप्ता प्रज्वलिता, जगतां हार्दं तमः हृदयसंबन्धि अन्धकारं, संहृत्य दूरीकृत्य, हृद्यार्थान् शोभनार्थान्, प्रकटीकरोतु प्रकाशयतु ॥ १७ ॥

**राजा धर्मरतोऽस्तु निर्जितरिपुः षड्वर्गवश्यो वशी,**
**निःक्लेशाः कृतिनो भवन्तु मुदिताः सत्कारलाभान्विताः ।**
**अन्योन्यप्रियताप्रसन्नमनसः सर्वत्र सन्तु प्रजा,**
**नित्यं तिष्ठतु सर्वसत्त्वनिचयैः सम्पूरिता मेदिनी ॥ १८ ॥**

[ इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे सुतोदयो नाम अष्टात्रिंशः परिच्छेदः ॥ ]

---

**पा०**—निलये (बी.) । पद्मश्रियो धीमते (बी.); पद्मश्रिया धीमतो (स.पु.मूले) **पद्मश्रियो धीमतो** (ने; स. पु. टीकायां ) ॥ १७ ॥ रिपुः षाड्गुण्ययोगान्वितः (बी.) । संपूजिता (बी.) ॥ १८ ॥

---

**टि०**—ग्रंथमुपसंहरन् एतद्वचनप्रवृत्तिप्रयोजनादिकमाह आसीदिति । ब्रह्मकुले ब्राह्मणजातौ । पद्मश्रीः इति ग्रंथकर्तुः नाम, प्राकृते प्रायः श्रीशब्दस्य परनिवेशो भवति, यथा मालतीमाधवे ( अं. १० ) लवंगिकोक्तौ श्रीमाधवस्य इत्यस्यस्थाने 'माहवसिरिणो' इति प्रयुक्तं, तदनुकरणं संस्कृतभाषायामपि दृश्यते, यथा "मातुलचंद्रवर्मश्रीः" इति विद्धशालभंजिकायां ( ४ अंके ); ज्ञानश्रीः इति ( सर्वदर्शनसंग्रहे ) विक्रमशिलाविहारस्य कस्यचिद्बौद्धपंडितस्य (वि.सं. १०३९) नाम, मंजुश्रीः इति च महाबोधिसत्त्वविशेषस्य नाम । हार्दं तमः अज्ञानरूपं अंतःकरणस्य अंधकारम् ॥ १७ ॥ समाप्तौ शिष्टाचारात् राजाप्रजानां शुभाशंसनं प्रयुंक्ते राजेति । 'षाड्गुण्ययोगान्वितः' इति पाठे षाड्गुण्ययोगः राजनीत्युक्तषड्गुणैः संबंधः । ते च—" संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः "

राजा धर्मनिरतः अस्तु, राजा किंविशिष्टः? निर्जितरिपुः निर्जिता रिपवो येन सः, षड्वर्गाः षड्गुणाः वशे यस्य सः, "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः" इत्यमरः। पुनः किंभूतः? वशी जितेन्द्रियः। कृतिनः पण्डिताः, सत्कारलाभान्विता मानलाभसंयुक्ताः, मुदिताः हर्षिताः, निःक्लेशाः क्लेशरहिताः, सन्तु भवन्तु। प्रजाः अन्योन्यप्रियताप्रसन्नमनसः सर्वदा सन्तु। मेदिनी सर्वसत्त्वनिचयैः संपूरिता तिष्ठतु॥१८॥

जगज्ज्योतिर्मल्लभूपैर्ग्रन्थानेकान् विलोक्य च।
इयं नागरसर्वस्वटीका यत्नेन साधिता॥

इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्वस्वटीकायां
अष्टादशः परिच्छेदः समाप्तः॥

॥ शुभम्॥

---

पा०—°पद्मश्रीज्ञानवि० (ने)। नागरकसर्वस्वे (ने)। इति नागरकसर्वस्वं परिसमाप्तम्॥ (ने)॥

---

इत्यमरः। तैः अन्वितः संपन्नः। 'षड्वर्गवश्यो' इति पाठे "कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा। षड्वर्गमुत्सृजेदेनं" (१।५७) इति कामन्दकीयनीतिसारोक्तः षड्वर्गः वश्यः आयत्तः यस्य सः। वशी नियंत्रितसमनःकर्मेन्द्रियः। कृतिनः पुण्यवन्तः। सत्कारलाभः अन्येभ्यः संमानपूजादिप्राप्तिः। अन्योन्यं परस्परस्योपरि, प्रियता स्नेहः मैत्री ईर्ष्याद्वेषादिकालुष्यनिवर्तिका। चरमपादेन स्वीयबौद्धधर्मसर्वस्वभूताहिंसाधर्मस्य पालनात् शुभफलमाशंसन् स्वस्य बौद्धत्वं द्योतयति। सत्त्वानां मनुष्यपशुकीटादियावत्प्राणिनाम्॥ १८॥ इति अष्टात्रिंशः॥ (॥ ३८॥)

टि०—नागरसर्वस्वकर्ता पंडितः पद्मश्रीः बौद्धः, तत्समयश्च निश्चितत्वेन ज्ञातुं न शक्यते तथापि अत्र (१७।१६) कुट्टनीमतग्रंथसंस्मरणात् श्रीविक्रमार्कसंवत्सर ८५० उत्तरं, शार्ङ्गधरपद्धतौ च अत्रत्यानां श्लोकानां उदाहृतत्वात् तत्समय (वि. सं. १२९४) पूर्वं अस्य सत्ताकालः। स च विक्रमसंवत्सरसहस्रं स्यादित्यनुमीयते, भगार्थे खगशब्दप्रयोगात् (१८।६) च काश्मीरिकोऽयमिति भाति॥ नागरस्तु—"अग्राम्यमंडनः प्राज्ञः शुचिः श्रीमांश्च गायनः। नर्मगोष्ठीप्रतिष्ठश्च षड्गुणो नागरो मतः॥" इति लक्षितः, स एव नागरकः चतुर इत्यर्थः॥

अपि च—

"योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमंत्रयते स धूमो, योनिरर्चिर्यदन्तः करोति तेऽङ्गारा, अभिनन्दा विस्फुलिंगाः॥ १॥ तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति'''॥ २॥" (छांदोग्योप० ५।८।), (पंचाग्निविद्योपदेशे),

"मन्थाः शिश्नः, स्मरोऽग्निर्भगमरणिरहो, रोमपंक्तिस्तु दर्भाः,
होमद्रव्यं हि रेतो, मणितमपि च वाग्ऋत्विजावण्डयुग्मम्।

एतत्कामाग्निहोत्रं विधिविहितमहो सालसास्रो भजन्ते
धिक्तान्धिक्तान्धिगेतानिति वदति सखे वारयोषिन्मृदंगः ॥ "

" फलं धर्मस्य विभवो, विभवस्य फलं सुखम् ।
सुखमूलानि तन्वंग्यो, विना ताभ्यः कुतः सुखम् ॥ "

" अवीक्ष्य वात्स्यायनभाषितानि
नराश्चिकीर्षन्ति रतोत्सवं ये ।
पशुव्रतं पालयितुं निबद्धा
योगाः कथं वन्द्यतमा न ते स्युः ॥ "

( सामराजदीक्षितकृतरतिकल्लोलिन्याम् । )

( पशुव्रतं पाशुपतव्रतं इति ध्वनिः । योगाः योगिनः इति ध्वनिः । दुष्करकर्मकारित्वात् वंद्यतमाः, अत्र च विपरीतलक्षणया अवन्द्या इत्यपि लभ्यते । )

दाक्ष्यं रसज्ञताहीनं, ज्ञानं गीतामतिं विना ।
कामशास्त्रं विना भोगो, येषां ते पशवो मताः ॥

" अथ निर्धनिनः प्रियोऽपि वा
विकलाङ्गश्च कलङ्कयुतोऽपि च ।
तरुणीजनभावपारगो
वशतां यान्ति नरस्य तस्य कान्ताः ॥ " ( शृं.दी. ३।६० )

" संपत्स्वरूपशौर्यादिसहितं वा प्रियं स्त्रियः ।
कं हसन्ति न पञ्चेषुशास्त्रपारगता हि ताः ॥" ( शृं.दी. ३।६३ )

( अत्र पंचेष्वित्यादिस्त्रीविशेषणेन तद्रहितं इति प्रियविशेषणमाक्षिप्यते । )

" असाध्यायाः सुखं सिद्धिः, साध्यायाश्चानुरञ्जनम् ।
रक्तायाश्च रतिः सम्यक् कामशास्त्रप्रयोजनम् ॥" (र. र. १।६)

इत्याद्युक्तेः तृतीयपुरुषार्थसाधनस्य कामशास्त्रस्य श्रवणाध्ययनादिकं अवश्यं कर्तव्यं, तदुक्तविध्यनुष्ठानेन च सुखाभासक्लेशरहितशुद्धपरमानंदस्तुलितब्रह्मानंदोऽवाप्तव्यः इति सर्वं भद्रम् ॥

कृता नागरसर्वस्वे नागरत्वस्य साधिका ।
नागरब्राह्मणेनेयं नटपद्रनिवासिना ॥
टिप्पणी तु यथाबुद्धि सप्तसप्ताङ्कभूमिते ।
वर्षे तनुसुखाख्येन, मोदन्तां रसिका जनाः ॥ ( युग्मम् । )

इति त्रिपाठ्युपनामकेन श्रीमनःसुखरामात्मजेन तनुसुखरामेण कृता
नागरसर्वस्वटिप्पणी परिपूर्णा ॥

श्रीरस्तु ॥

# परिशिष्टानि ॥

## ( क )-टिप्पणीपूर्तिः ।

( १ ) परि० १४। श्लो० १०। पृ. ४५ अन्ते-उक्तं च रतिरत्नप्रदीपिकायां ( १३।३५ ) "पद्मिनीं शशको गच्छेच्चित्रिणीं शंखिनीं वृषः । हस्तिनीं तु हयो गच्छेदित्युक्तो निर्णयो बुधैः ॥" इति ॥ १० ॥

( २ ) परि० १५।१। पृ. ४७ अन्ते-तदुक्तं मनुना-"आकारैरिंगितैर्गत्या स्वरहासावलोकनैः । नेत्रवक्त्रविकारैश्च ज्ञायतेऽन्तर्गतं मनः ॥" ( मनुस्मृतौ ८।२६ ) इति ॥ १ ॥

( ३ ) परि० १५।६। पृ. ४८-साध्याः प्रायो नष्टचारित्रा भवंति, ताश्च क्षेमेन्द्रेण कलाविलासे ( ३।२८-२८ ) परिगणितास्तत्र द्रष्टव्याः । तथा शृंगारसरस्यामपि-"अविदग्धवृद्धबहुदिनरुग्णग्रामीणबालकप्रमदा । अतिकामुकी च योषा सुखसाध्या षड्विधा कथिता ॥" इति ॥ ६ ॥

( ४ ) परि० १५।७। पृ. ४८ अन्ते-उक्तं च शृंगारसरस्यां-"दुष्टाभिवेष्टिता लोकाद्भीता दूतीविवर्जिता । तथा चंचलचित्ता च कष्टसाध्या चतुर्विधा ॥ साध्वी गुरुजनाद्भीता परिवाराभिवेष्टिता । भृशानुरागिणी पत्यावसाध्या स्याच्चतुर्विधा ॥" इति ॥ ७ ॥

( ५ ) परि० १६।४। पृ० ५२ टि० पं. ५ वसंतः ॥ इत्यनंतरम्-तत्रापि समयभेदोऽन्यत्रोक्तः-"शीते रात्रौ, दिवा ग्रीष्मे, प्रावृड्गर्जिप्रवर्षणैः । वसंते च दिवा, रात्रौ शरदि, सरसः स्मरः ॥" इति ॥ ४ ॥

( ६ ) परि० १६।५। पृ० ५२ टि० पं. ८-तथाहि अन्यत्र-"बाला तु प्राणदा प्रोक्ता, तरुणी प्राणधारिणी । जरां वितनुते प्रौढा, वृद्धा स्यान्मृत्युदायिनी ॥" इति ॥ अन्यच्च-"वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् । वयोधिकां स्त्रियं गत्वा तरुणः स्थविरायते ॥" इति ॥ ५ ॥

( ७ ) परि० १८।६। पृ० ६० टि० पं. ७ भगः । इत्यनंतरम्-प्रयुक्तोऽयं च शब्दोऽस्मिन्नेवार्थे बोधिसत्त्वावदानकल्पलतायां ( ९९।११३ ) "जन्मवर्त्मप्रदा माता, पिता बीजवपत्खगः ।" इत्यत्र ।

( ८ ) परि० २०।८। पृ. ६७ टि. पं. ११-शैवतंत्रोक्ताश्च ताः काव्यादर्शस्य प्रेमचंद्रतर्कवागीशकृतटीकायां (३।१६२),

( ९ ) परि० २०।९। पृ. ६८. टि. पं. २-३ स्थाने-संचूषणं च अत्रैव सप्तविंशे परिच्छेदे उक्तं चतुष्प्रकारकम् ॥ यद्वा ध्वजचूषणं, तच्चेदानीमपि द्रविडेषु बालाः कोमलकदलीफलसंचूषणैः शिक्ष्यंते ॥

( १० ) परि० २०।१३ अनन्तरम् । पृ. ७० । टि. पं. १२ 'इति ।' इत्यनन्तरम्-अपिच-"वाचि श्रीर्माथुरीणां, जनकपदस्थायिनीनां कटाक्षे, दंते गौडांगनानां, सुललि-

तजघने चोत्कलप्रेयसीनाम् । तैलिंगीनां नितंबे, सघनघनरुचौ केरलीकेशपाशे, कर्णाटीनां कटौ च, स्फुरति रतिपतिर्गुर्जरीणां कुचेषु ॥" इति । अन्यच्च-" सौराष्ट्री सुरतोपचारचतुरा, मुग्धा महाराष्ट्रिका, रामा मालवदेशजा मनसिजावेशोल्लसन्मानसा । गौरांगी गुणगर्वगौरववती गानप्रिया गुर्जरी, काश्मीरी कलभाषिणी, यवनजा चेतोहरा चेति षट् ॥" इति कामसमूहे । तथा तत्रैव चमत्कारकारिणी चाटूक्तिः-" धन्यस्त्वं भुवि यस्य राजति महाराष्ट्रीकुचोच्चं कुलं, लाटीवाङ्मृदु नर्म, चेदिवनितानाभीगभीरं वचः । आभीरीकटिविस्तृता मतिरसिगौडीकचश्यामलः, कर्णाटीरतनिष्ठुरो रणरसः, कीरीमुखोत्थं यशः ॥" इति ॥

( ११ ) परि० २४।२। पृ. ७७ अंते-तथा च नैषधमहाकाव्ये जंघादिवर्णने उत्प्रेक्षे-" क्रमोद्गता पीवरताऽधिजंघं वृक्षाधिरूढं विदुषी किमस्याः । अपि भ्रमीभंगिभिरावृताङ्गं वासो लतावेष्टितकप्रवीणम् ॥" ( ७।९७ ) इति । ( तत्र टीकायां नारायणेनोदाहृतौ श्लोकौ-" बाहुभ्यां कंठमालिंग्य कामिनी कान्त उत्थिते । अंकमारोहते तस्य वृक्षारूढः स उच्यते ॥ उपविष्टं प्रियं कान्ता सुप्ता वेष्टयते यदि । तल्लतावेष्टितं ज्ञेयं कामानुभववेदिभिः ॥" इति । ) ३ ॥

( १२ ) परि० २४।९ अनन्तरम् । पृ. ८० टि. पं. ६ अन्ते-इदमेवान्यत्र ' स्तनालिंगनं ' इति, ' कंठसूत्रं ' वेत्युक्तम् ॥ अपरं च " यत्राभिनवया वध्वा लतयेव मघौ द्रुमः । स्वयमालिंग्यते कान्तः स स्यान्नवलतोत्सवः ॥" इति हरविजयमहाकाव्यटीकायाम् १७।९३ ) एवं बहवो भेदाः ॥

( १३ ) परि० २५।१० अनन्तरम् । पृ. ८२ टि. पं. ९ अन्ते-अन्यत्र चुंबनस्थलभेदात्-भालचुंबनं, नेत्रचुंबनं, कपोलचुंबनं, रसनाचुंबनं, ओष्ठचुंबनं, चिबुकचुंबनं, कंधराचुंबनं, कुचचुंबनं, नाभिचुंबनं, गुह्यचुंबनं, चेति अन्वर्थसंज्ञानि दश प्रोक्तानि । कचित्कचिदन्यान्यपि कल्पितानि, यथा-" नकारबहुलाक्षिप्तहस्तान्तं स्वंचिताधरम् । रभसा गंडसंस्पर्शैः स्फीतं तच्चुंबनं मतम् ॥" इति कामावतारे ॥

( १४ ) परि० ३२।४ अनन्तरम् पृ. ९८ टि. पं. २४ ०भूयते । इत्यनन्तरम्-उभयोश्च कामावेशविशिष्टावर्णनीयमुखशोभादर्शनलाभोऽपि जायते, तदुक्तं-" अन्योन्यवदनांभोजविलोकनरसं विना । न चुंबने न सुरते कश्चिदस्ति सुखोदयः ॥" ( ८९।१५३ ) इति बोधिसत्त्वावदानकल्पलतायाम् ॥

( १५ )पृ. ९९टि० पं. २५.ध्वजेन।) इत्यनंतरम्-यथा कर्मज्ञानकांडाभ्यां विभक्ते वैदिकधर्मे कर्मणां प्रमाणत आधिक्यं, तदनुष्ठानदार्ढ्ये च शीघ्रं ज्ञानोदयः, तथाऽत्रापि बाह्यसुरतकर्मणां प्रमाणत आधिक्यं, तदनुष्ठानबाहुल्ये च रमणीनां आभ्यंतरसुरततृप्तिः अचिरेण परिपूर्णतया च जायते ॥

( १६ ) ,, पृ. १०० पं. ३ अन्ते- भुक्ता योनिः शिथिला आताम्रा च जायते ॥ सुरतान्ते मदनच्छत्रं सुरतकालीनमर्दनेन संचितरक्ततया विकसितं भवति । मदनच्छत्रप्रमाणेन स्त्रीवेगोऽनुमेयः, तस्य महत्त्वं सोऽपि तथेति ॥

( १७ ) पृ. १०० टि० पं. १५ भवंति ॥ इत्यनंतरम्–अन्यच्चोक्तं केनापि रामाभोगरहस्यविदा–" द्राक्षारससमा बाला, तरुणी शर्करोपमा । आम्रफल( ' रस ' )समा प्रौढा, वृद्धा स्त्री नालिकेरवत् ॥" इति । ( अत्र उपमाभिः आभ्यंतररतसंसिद्धये उत्तरोत्तरं बाह्यरतविमर्दाधिक्यं सूचितं, प्रौढानां च रसास्वादोत्कृष्टत्वम् ॥

---

## ( ख )–पाठान्तरपूर्तिः ।

( १ ) परि० १३।१७–गतो० विलोकनादौ । नानाविधाकूतचमत्कृतिश्च पराङ्मुखं चास्यमयं विलासः । इति अभिज्ञानशाकुंतलटीकायां राघवभट्टकृतायां पाठः ।

( २ ) परि० १५।११– सत्संप्रदाने० तन्व्या तरुणी सदैव । अर० पतेश्चि० । ( माधवकृतायुर्वेदप्रकाशे ) ।

( ३ ) परि० १६।–०मृतुरागविभावनात् ( माधवकृता० ) । १ ॥ ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधिः ॥ २ ॥ वृद्धातत्परतो ज्ञेया । ३ ॥ बाला हिता विषयिणे ·· । तरुणी शीतसमये ·· । ४ ॥ नित्यं बाला सेव्यमाना नित्यं·· तरुणी ह्रसयेच्छक्तिं प्रौढोद्रावयते जराम् ॥ ५ ॥ सेव्या हि । अलोमशं तु कक्षायां मुखे संजायते । ६ ॥ आसने० उत्थितेऽप्यतिरूढां च । ७ ॥ नारभेत रतं ताव० । अन्यथा···( शा. प. समः )। ८ ॥ (शा.प. समानः)९ ॥ विद्महे पुष्पबाणाय ।१०॥ (इति माधवकृतायुर्वेदप्रकाशे पाठभेदाः॥)

---

## ( ग )–नागरसर्वस्वे प्रमाणत्वेनोपन्यस्तानां ग्रंथग्रंथकारादीनां निर्देशसूची ।

| | परि० श्लो. | पृष्ठं | विवेचनम् |
|---|---|---|---|
| कपिलः ( मुनिः ) | १३ । २१ | ३५ | विक्षेपहावस्य लक्षणे । |
| ( कर्णाटे कान्ता ) | १२ । २ | २४ | ( नीचरतोद्विग्ना पतिघातिनी काचित् । ) |
| कामतंत्रं (शांकरम्) | ३८ । १६ | ११४ | महेश्वरनाम्ना समुद्धृताः श्लोका एतस्मादेव ग्रंथास्स्युः । |
| कुट्टिनीमतम् | ३७ । १६ | ११० | काश्मीरिकदामोदरगुप्तकविविरचितं काव्यम् । |
| पद्मश्रीः | १ । २ | २ | नागरसर्वस्वकर्ता । |
| | ३८ । १७ | ११५ | |
| ( मतान्तरम् ) | १९ । ११ | ६३ | |
| महेश्वरः | १ । ५ | ३ | कामतंत्रस्य कर्ता |
| | १६ । ६ | ५२ | |
| | १६ । १५ | ५५ | |
| | १७ । ८ | ५८ | |

| | | | |
|---|---|---|---|
| मुनीन्द्रः | ३४। २ | १०३ | मर्दन[redacted] । वात्स्यायनादन्यः क[redacted] |
| ( रत्नकुमारः ) | ११। २ | २३ | ( संवे[redacted]ः कश्चित् । ) |
| रत्नशास्त्रम् | ३। ६ | ९ | |
| लोकेश्वरम् | ४। २ | ११ | गन्धशास्त्रम् । अप्रसिद्धम् । |
| वात्स्यायनः | ३७। १९ | १०९ | कामसूत्रकर्ता । |
| वासुदेवः | ३८। १७ | ११५ | ग्रंथकर्तुर्मित्रं ब्राह्मणः, एतद्ग्रंथरचने प्रेरयिता । |
| सिद्धैकवीरम् | ३८। १६ | ११४ | तंत्रविशेषः । बौद्धानामिदं भवेत् । प्राणतोषिण्यामप्युदाहृतम् । |

## ( घ )–नागरसर्वस्वादन्यत्रोदाहृतानां श्लोकानां निदर्शनपत्रम् ।

( १ ) रुद्रकृतस्मरदीपिकायाम्–( ना. स. ) १।३; १२।१–२–९–१०–१३; १४।१७–१८; १५।३–३–४–५–७–८–९–१०–११; १६।१–२–३–४–५–७–८–१२–१३; २८।८.

( २ ) शार्ङ्गधरकृतसुभाषितपद्धतौ–४।७–१० ( शा. प. ३२५०–३२५१ कर्तृनामरहितौ ); ४।१७–१८–१९ ( शा. प. ३२६०–३२६२–३२६३. पद्मश्रियः इति स्वनामनिर्देशम् । ) ५।४ उ. ५ पू. ( ३१४६ ); ५।५ उ. ६ पू. ( ३१४७ ); ५।७ ( ३१४८ ); ५।८ उ. ९ पू. ( ३१४९ ); ५।१०–११ ( ३१४४–३१४५ ); ७।३ ( ३१५० ); ८।२ ( ३१५१ ); ( एते पद्मश्रियः इति सनिर्देशम् । )

१३ अध्यायः समग्रः ( शा. प. ३१५२ आरभ्य ३१८८ अन्तम् । कर्तृनामनिर्देशं विना । ) ॥ १६।१ आरभ्य ८ अन्तम् ( शा. प. ३१३४ आरभ्य ३१४१ अन्तम्, एते पद्मश्रियः इति निर्देशेन सहितम् । ) १६।९–११ ( ३१८९–३१९० नामनिर्देशं विना । )

( ३ ) माधवकृतायुर्वेदप्रकाशस्थकामनिरूपणाध्याये–४।१७ ( सकर्तृनाम ); १६।१ आरभ्य ८ अन्तम् ( एते पद्मश्रियः इति कथनसमेतम् । )

( ४ ) राघवभट्टकृताभिज्ञानशाकुंतलटीकायाम्–१३।१७ ( शा. टी. १।२६; २।२)॥

( ५ ) अनंतकविसंदब्धकामसमूहे ।

## ( ङ )–टिप्पणीगतसंक्षिप्तनामसंकेतसूचीपत्रम् ।

अ. र.–अनंगरंगम्, कल्याणमल्लविरचितम् ।

का. सू.–कामसूत्रम्, वात्स्यायनगोत्रोत्पन्नेन मल्लनागेन विरचितम् ।

कु. म.–कुट्टनीमतम् ( काव्यं ), दामोदरगुप्तविरचितम् ।

ज. मं.–जयमंगलानाम्नी वात्स्यायनीयकामसूत्रस्य टीका, शंकरार्य-प्रणीता ।

टी. पा.–टीकायामेव पाठः, न तु तथा तत्रैव मूले ।

ने.–नेपालमहाराजानां पुस्तकभाण्डागारस्थं " १६४८ । च " इति संख्याङ्कितं नागरसर्वस्वमूलमात्रस्य पुस्तकम् ।

पं. सा.–पंचसायकम्, कविशेखराचार्येतिबिरुद्वता ज्योतिरीश्वरेण प्रणीतम् ।

बी.–बीकानेरमहाराजपुस्तकभाण्डागारस्थं मूलग्रंथस्य पुस्तकम् ।

मी. स्म. दी.–मीननाथकृता स्मरदीपिका ।

र. र.–रतिरहस्यम्, कुक्कोकविरचितम् ।

र. र. टी.–रतिरहस्यटीका, कांचीनाथकृता ।

र. र. प्र.–रतिरत्नप्रदीपिका, देवरायमहाराजप्रणीता ।

वि. सं.–विक्रमार्कसंवत्सरः ।

शा. प.–सुभाषितपद्धतिः, शार्ङ्गधरविरचिता ।

शृं. दी.–शृंगारदीपिका, यस्या रतिरहस्यम् इत्यप्यपरं नाम, हरिहरकृता ।

स. पु.–नागरसर्वस्वस्य सटीकं पुस्तकम्, नेपालमहाराजपुस्तक-भाण्डागारस्थं " १४६४ " इति संख्यांकितम् ।

सा. द. ग–पु.–निर्णयसागरमुद्रालयमुद्रितसटीकसाहित्यदर्पणपुस्तके अवलोकितं ग–संज्ञितहस्तलिखितपुस्तकम् ।

स्म. दी.–स्मरदीपिका, रुद्रकृता ।



# ( च )—नागरसर्वस्वस्थश्लोकाद्यपादानां वर्णानुक्रमणी ।

# ( छं )—नागरसर्वस्वपारिभाषिकशब्दानां सूचीपत्रम् ।

# ( छ )–नागरसर्वस्वटिप्पणीगतशब्दानुक्रमणी ।



# (झ)—नागरसर्वस्वटिप्पणीगतविशेषाणां सूचीपत्रम् ।

# शुद्धिपत्रम्

## ( मूले )

| पृ. | पं. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | ११ | तथा च महेश्वरः | ० |
| १६ | ३ | संभूषणे | संचूषणे |
| | टिप्पणीपंक्ति. | ( टिप्पण्याम् ) | |
| ३५ | ६ | कपिलावार्यः | कपिलाचार्यः |
| ५३ | ८–९ | महेश्वरस्तु ··· नोपलभ्यते | ० |
| ५८ | ८ | स्वीद्दीपन | स्वोद्दीपन |
| ६९ | ४ | चुबने | चुंबने |
| ७० | २ | भ्रियोक्ति | प्रियोक्ति |
| ७१ | ११ | इति ॥ | इति ॥ ४ ॥ |
| ७७ | ८ | उर्ध्वं | ऊर्ध्वं |
| ८० | १० | सुरतान्तेव | सुरतान्ते वा |
| ९६ | १५ | अवलंबनात | अवलंबनात् |
| १०६ | १० | पीतसद्भूपं | पीतसद्रूपं |
| | | ( परिशिष्टे ) | |
| ११९ | ७ | कीरीमुखोत्थं | कीरीमुखाच्छं |
| १३४ | १ | ( छ ) | ( ज ) |

(For private circulation only.)

पद्मश्रीविरचितं

# नागरसर्वस्वम् ।

सटीकम् ।